first line on these folios lost. One folio (fol. 30) is entirely missing, and comments on IV, 15 (partly), 16-22, 23 (partly) are thus lost. On fol. 29b, a part of the commentary on IV, 14, has been struck off (probably inadvertently) and then penned over again in deeper ink, thus blurring the whole impression. The commentary fails to impress us either by its learning or its acumen and is not so full as Janārdana's, but in some cases its suggestions are striking and helpful. The patronymic *nāga* is common in Bengal, and there are other indications in the *ṭīkā* which make it probable that Sarvānanda was also a Bengali He follows *Kātantra* but not slavishly. He quotes अमरकोश generally but also मेदिनी (on I, 9, 26, etc ), विश्व (*e.g.*, on II, 8, 14, 24 , III, 8), दामोदर (on I, 9, 15), कोश (on II, 2 ; III, 1), महेश्वर (on II, 7), and शब्दार्णव (on II, 11), although as a rule its quotations from lexicons are anonymous. It is not impossible that Janārdana had before him this commentary for in some places Janārdana's alternative suggestions (यद्वा) agrees with Sarvānanda's explanations, and in one instance especially (on V, 2), the कश्चित् of Janārdana appears to be Sarvānanda. The name of the scribe as well as the date of the copy of the MS is given at the end in a doggerel verse :

टीकेयं लिखिता श्री[मद्]रामशरणशर्मणा ।
पञ्च(वे)दरसक्षोणीयुक्शकाब्दे सुखप्रदा ॥[18]
मल्लाब्दे रसयुग्माशायुजि टीकेयमालिपत् ।
शुक्रे शनौ नवाहे च पूर्वाह्ने पाठहेतवे ॥

---

[18] युक्शके पाठहेतवे was originally written, but corrected thus on the margin

This gives us *śakâbda* 1642 and *mallâbda*[19] 1026 (= A.D. 1720) as the date of the copying of the MS. The use of the Malla Era would indicate the currency of this commentary in Mallabhūma (= District Bankura in West Bengal), to which place it is not unlikely that the scribe Rāmaśarana (and also probably Sarvānanda) belonged.

In conclusion, it is my pleasant duty to thank those who have helped me in bringing out this edition. I am grateful to the Vice-Chancellor and the authorities of the Dacca University for allowing me to utilise the two MSS of the text in the University collection, for arranging about the loan of the India Office MS of the commentary and for generously including it in their series of oriental publication. To Professor F. W. Thomas my hearty thanks are due for allowing me to borrow the India Office MS (of which he had charge at that time as the librarian of the India Office) and for kindly looking over the press copy of this edition, which was sent to him by the University for his expert opinion regarding publication. To Mahāmahopādhyāya Dr. Haraprasād Śāstrī I must acknowledge deep obligation for his very kind interest in this work and for the loan of his own MS of the commentary of Sarvānanda-nāga. I must also convey my thanks to my colleague Pandit Nanigopal Banerji, Kāvyatīrtha, Asst. Lecturer in Sanskrit in this University, for his suggestions and for the assistance he has rendered in collating with

---

[19] On the Malla Era, see *Indian Historical Quarterly* Vol III, pp 180-1, 412, *Descriptive Catalogue of Bengali MSS*, Vol I (Calcutta University, 1926), pp vi-vii

me the MSS of the text and the commentary. But for the edition itself and its imperfections I must take the entire responsibility.

UNIVERSITY OF DACCA
*January 15, 1927*

S. K. DÉ

*

॥ श्रीः ॥

महाकविनीतिवर्मविरचितं

# कीचकवधम्

श्रीजनार्दनसेनकृतया तत्त्वप्रकाशिकाख्यया

व्याख्यया समेतम् ।

---

## प्रथमः सर्गः ।

---

जितः सुचरितोच्छेदी[1] स्मरोऽयं दुःसहो मया ।
इतीव देहमकरोदभिन्नं यः सहोमया ॥ १ ॥

Benediction, invoking Śiva,

वन्दामि वृन्दारकवृन्दवन्दितामानन्दसन्दोहनिदानसेविताम् ।
सदा सदानन्दचितं[2] चिदम्बरे विराजमानाममलां सदाशिवाम् ॥
श्रीजनार्दनसेनेन विदुषा[3] तोषकाशिका[3] ।
क्रियते कीचकवधकाव्यतत्त्वप्रकाशिका ॥

तत्र तावत्कविकुलकुवलयबन्धु[4]सिन्धुसन्तोषेन्दुप्रकृतिसुन्दरशुद्ध-बोधधर्मा श्रीनीतिवर्मा प्रारिप्सितप्रतिबन्धकप्रत्यूहव्यूहविघाताय

---

१. चरित॰ A; it appears that तो was written first but the vowel sign was erased afterwards. A begins with ओं नमो गणेशाय; B with श्रीदुर्गा ।

२. ॰चिदं Ms.

३. Erased and written on the u. m.

४. ॰बन्धु repeated in Ms.

बिभर्ति हारमनघं यो भस्मभिरहिं सितम् ।
तेजश्च मन्मथशरैरिन्द्रियार्थैरहिंसितम् ॥ २ ॥

शिष्टाचारानुमितवेदबोधितदेवतानामकीर्तनरूपं मङ्गलमाचरन् शिष्य-शिक्षार्थं ग्रन्थादौ निबध्नाह—जितेति । मया दुःसहोऽयं स्मरः कामः, दुःखेन सह्यते नियम्यत इत्येतेनास्य प्रबलता ध्वनिता, एवंभूतोऽपि जितः पराभवं प्रापितः । ननु तस्यानिष्टकारित्वाभावात् कथं निग्रह इत्यत आह—सुचरितेति । शोभनं यच्चरितं शीलं शुभादृष्टं (!) वा तस्योच्छेदी उन्मूलयिता । तथा च, ईदृशां दमनमेवोचितमिति भावः । इतीव इत्ये[त]स्मादेव कारणात् । इव उत्प्रेक्षायाम् । उमया पार्वत्या सह देहम् [ fol. 2a ] यः[1] अभिन्नमेकमर्धनारीश्वरात्मकमकरोत् कृतवान् । तथा च तादृशदेहैक्ये भगवत्या आराधनमेव बीजम्, न तु कामवश्यत्वम् । तस्य पराजितत्वेन विगलितप्रभावत्वादिति भावः । उक्तं च महिम्नः स्तोत्रे (श्लो० २३)—'यदि स्त्रैणं देवी यमनियत-देहार्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः' इति ॥ १ ॥

इदानीं तस्यानन्यसाधारण्यमाह—बिभर्तीति[2] ॥ कुलकम्[3] । यो भस्मभिर्विभूतिभिः सितं शुक्लम् अहिं फणिनं हारं बिभर्ति । कीदृशम्—अनघं हृद्यम् । एतेन सदाशिवस्य सच्चिदानन्दरूपत्वाद्विषयवासनैव नास्तीति ध्वनितम् । उक्तं च तन्महिम्नः स्तोत्रे ( श्लो० ८)—'न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति' इति । एतदेव स्पष्टयन्नाह—तेजश्चेति । मन्मथशरैः कामबाणैरहिंसितम् अनभिभूतं तेजश्च बिभर्तीत्यर्थः । कीदृशैः—इन्द्रियार्थैः विषयरूपैरिति ॥ २ ॥

---

१. Written in the l. m

२ बिभेति Ms.

३ This is added on the u. m.

यस्याहुरतिगम्भीरजलदप्रतिमं गलम् ।
स वः करोतु निःशङ्कमुदयं[1] प्रति मङ्गलम् ॥३॥
या त्रिलोकनता[2] मूर्तिरुपायेन जुगोप ताम् । and Kṛṣṇa
योऽवहत् कंसनिधनप्रयुक्तामृजुगोपताम् ॥ ४ ॥
बभार वपुरम्भोजप्रभया[3] पूतनाभि यः ।
पपात कर्मणा यस्य प्रभया पूतना भियः ॥ ५ ॥

पुनस्तमेव विशिनष्टि—यस्येति ॥ यस्य गलं कण्ठदेशः अतिगम्भीर-जलदप्रतिमम् अतिनीलमित्यर्थः । एतेन कालकूटादिपानादिकर्तृत्वेना-चिन्त्यविभवत्वं ध्वनितम् । आहुः आर्या इति शेषः । स उक्तलक्षणा-क्रान्तः शिवः । असाधारण [fol. 2b]विशेषणैर्विशेष्योपस्थितिः, अयमुदयती[ति]वत् । वो युष्माकं निःशङ्कं यथा स्यात्तथा उदयं प्रति वृद्धिं प्रति मङ्गलमभिप्रेतार्थसिद्धिं करोत्वित्यन्वयः ॥ ३ ॥

विघ्नबाहुल्यभिया मङ्गलान्तरमप्याह—या त्रीति ॥ या त्रिलोकतना स्वर्गमर्त्यपातालरूपा मूर्तिः, तामुपायेन दुष्टदैत्यादि-वधादिरूपेण जुगोप रक्षितवान् । यश्च कंसनिधनप्रयुक्तां तन्नाशैक-प्रयोजनाम् ऋजुगोपतामवहत् ॥ ४ ॥

पुनस्तमेव विशिनष्टि—बभारेति ॥ य एवंभूतं वपुः शरीरं बभार । कीदृशम्—अम्भोजप्रभया पूता नाभिर्यत्र तत् । यस्य कर्मणा स्तन्य-पानच्छलप्राणाकर्षणरूपेण पूतना राक्षसी भियः भयात् पपात, मृतेति यावत् । अतएव प्रभया प्रकृष्टं भयं यस्याः सा ॥ ५ ॥

---

१. निःसङ्ग० A.
२. ०लता B. The commentary appears to be read त्रिलोकतना.
३. ०म्भोद A.

स पुनातु व्रजे यश्च गोरजःपातरूक्षितौ ।
शिशुरुच्छिद्य[१] यमजौ[२] निष्पिपेष तरू क्षितौ[३] ॥६॥
अस्ति राजा जगद्गीतमहिमा लोकविग्रहः ।
साक्षादिव रुचां स्थानमहिमालोकविग्रहः ॥ ७ ॥
तस्मिन्नृपे स्वशक्तीनां ज्योतिरक्षति रक्षति[४] ।
कलिरस्याः क्षितेस्त्राणमकरोदिति रोदिति ॥८॥

Praise of the poet's patron whose name is not mentioned,

स पुनेति ॥ यो व्रजे गोकुले रजसां [ fol. 3a ] धूलीनां पातेन रूक्षितौ तद्युक्तौ यमकौ प्रसिद्धयमलार्जुनौ तरू उच्छिद्य उत्पाट्य क्षितौ पृथिव्यां निष्पिपेष । कीदृशः—शिशुः बालकमूर्तिः । स कृष्णः पुनातु, युष्मानिति शेषः । पूर्ववद्विशेष्योपस्थितिः ॥ ६ ॥

यदाज्ञया कविकाव्यं तमाह—अस्तीति ॥ प्रसिद्धतयेति शेषः । प्रसिद्धौ बीजमाह—[जगदित्यादि] । जगति गीतो महिमा महत्त्वं यस्य सः । लोकविग्रहः मनुष्यशरीरः, यद्वा लोक्यते [इति] लोक[:] दर्शनीयः, तादृग्विग्रहः । प्रतापमाह—साक्षादिव रुचां तेजसां स्थानमाधारः । इवोत्प्रेक्षायाम् । अतएव अहिमो हिमविरुद्धो य आलोकस्तद्विग्रहः तन्मयशरीर इति यावत् ॥ ७ ॥

गुणानाह—तस्मिन्निति ॥ तस्मिन् राजनि स्वशक्तीनां प्रभावोत्साहमन्त्रजानां ज्योतिः[५] अक्षति यथा स्यात्तथा[६] रक्षति सति, अस्या महाक्रान्ताया अपि क्षितेस्त्राणमकरोत् । अर्थादयं मयि

१ °रुच्छिद्य B.
२. The reading of the commentary is यमकौ.
३. This line is written in the l. m. in A.
४. This word is supplied on the u. m. in A.
५. This word is added in the l. m
६ Ms adds क्षितिं after तथा.

स गुणाकृष्टहृदयैः सुरसिद्धैरपीडितः ।
प्रतापक्षतदर्पैश्च परचक्रैरपीडितः ॥९॥
तस्यारिजातं नृपतेरपश्यदवलम्बनम्[1] ।
ययौ निर्झरसम्भोगैरपश्यदबलं वनम्[1] ॥१०॥

सति एतत्त्राणे [समर्थ इति[2]] मत्पराभव एवेत्यस्मात् कारणात् कलिर्युगविशेषः कलहो वा रोदिति[3] ॥८॥

[fol. 3b] स गुणेत्यादि ॥ स राजा सुरैर्देवैः सिद्धैः सिद्धपुरुषैर्वा ईडितः स्तुतः । किंभूतैः—गुणैः शौर्यादिभिराकृष्टं हृदयं[4] येषां[4] तादृशैः । परचक्रैः शत्रुराजचक्रैश्च[5] अपीडितः[5] । प्रतापक्षतदर्पैः प्रतापेन क्षतो दर्पो येषां तादृशैः । एतदप्युदात्तम् ॥९॥

तस्येत्यादि ॥ तस्य राज्ञः अरिजातं शत्रुसमूहो वनं ययौ । किंभूतमरिजातम्—अबलं आहाराभावात् सामर्थ्यशून्यं सैन्यशून्यं वा । किं कुर्वत्—अपो जलानि श्यत् तनूकुर्वत् । शो तनूकरणे (धा० ४।३७), दैवादिकोऽयम्[6] । कैः[6]—निर्झरसम्भोगैः[6] जलप्रवाह-

---

१ बलं in both places, B. Bhoja who quotes this verse in his *Sarasvatī-kaṇṭhâbharaṇa*, ed Borooah, 1884, p. 74, reads निर्भरशस्त्रौघैः in the second line

२. There appears a space left here in the MS , but the word ज्योतिः is written on this space within brackets, apparently supplying an omission of this word made before (see f. n. 5, p. 4 )

३. From fol. 3b writing in a different hand appears and continues to the end of the poem.

४ and ५. These words or letters are added on the u m.

६. These words or phrases are added by another hand, कैः is added on the u m

निसर्गजिह्माप्यार्येण तेन कीर्त्या विराजता ।
नीता विश्वसनीयत्वमार्जवै[१]र्भुवि राजता ॥११॥
तस्य तच्छीलमन्येषामपश्याम न यद्वयम् ।
कामं क्रोधं च सोऽर्थस्य हेतुत्वमनयद् द्वयम्[२] ॥१२॥

सम्भोगैः । एतेन प्रतिबह्वः शत्रवस्तेन राज्ञा[३] वनं प्रस्थापिता इत्युक्तम् । पुनः किं कुर्वत्—अवलम्बनम् अवलम्बनयोग्यं जनमपश्यत् ॥१०॥

इदानीमसाधा[र]ण्यमाह[४]—निसर्गेत्यादि ॥ तेन राज्ञा भुवि पृथिव्यां राजता राजत्वम् आर्जवैः ऋजुभावैर्विश्वसनीयत्वं, अर्थात्[५] प्रजानाम्[६], नीता प्रापिता । किंभूता राजता—निसर्गजिह्मापि स्वभावकुटिलापि । अपि विरोधे । तेन किंभूतेन—आर्येण सज्जनेन । तथा कीर्त्या विराजता शोभमानेन । अन्येषां राज्ञां राजत्वं केषामपि विश्वसनीयं न भवति [fol. 3a], तस्य तु ऋजुस्वभावस्य राजत्वं सर्वेषां विश्वासस्थानमित्युत्कर्षातिशयः । 'स्वरूपं च स्वभावश्च निसर्गश्च' इत्यमरः (१।६।३८) ॥११॥

तस्येत्यादि ॥ तस्य राज्ञस्तच्छीलं तच्चरितम् । तदिति किं—यच्छीलं वयमन्येषां[७] राज्ञां नापश्याम न दृष्टवन्तः । ह्यस्तन्या

१. °माजावै° B.

२. This line is missing in B. °यद्वयम् in A.

३. This letter is added in the l m.

४. °मसा......ह is added by another hand, of which °माह is written in the l. m.

५. °विश्व......र्थात् added by another hand.

६. Added in the l. m.

७. °न्येषां added by another hand.

न तस्मिन्नपराद्धानां दारै[१]रविधवाय्यते[२] ।
रणे तु त्रस्तहृदयैर्योधैरविधवाय्यते[२] ॥१३॥

(का० ३।१।२७) रूपम् । अनन्यसाधारणशीलोऽयं नृप इत्यर्थः । तदेव प्रकटयति—स राजा कामं क्रोधं च एतद् द्वयम् अर्थस्य हेतुत्वमनयत् । कामं स्वपत्न्यामेव कुर्वन् पुत्रोत्पादनरूपस्यार्थस्य हेतुत्वमनयत् । क्रोधं चापराधिष्वे[व] कुर्वन् राजनीत्या तेषां धनं हरन्नर्थस्य हेतुत्वमनयत् । कामक्रोधावर्थनाशकरावपि[३] तेनार्थहेतुत्वं प्रापितावित्युत्कर्षः । 'शुचौ तु चरिते शीलम्' इत्यमरः[४] (१।६।२६) ॥१२॥

न तस्मिन्नित्यादि ॥ तस्मिन् राज्ञि अपराद्धानां कृतापराधानां दारैः[५] पत्नीभिर्न अविधवाय्यते[६] । अविधवा इवाचरति अविधवायते, 'कर्तुरायिः सलोपश्च' (का०३।२।८) इत्यायिः, तस्माद्भावे आत्मनेपदम् । ततः 'सार्वधातुके यण्' (का०३।२।३१) इति यण् । एतेन तेन राज्ञा अपराधिनो घातितास्तेषां पत्न्यो विधवाचारमाचरन्तीति प्रतिपादितम् । रणे तु योधैरर्थाद् वैरिवी [fol. 4b]रैरविधवाय्यते भेटकस्त्रीभिरिवाचर्यते । अविर्धवो यस्याः सा । किंभूतैर्योधैः—त्रस्तहृदयैः भीतमनोभिः । 'अवयः शैलमेषार्काः' इत्यमरः (३।३।२०८) ॥१३॥

---

१. द्वारै० B.

२. ॰वार्यते in both places in B. The line रणे तु is added on the u. m. in A.

३. ॰रा० added on the l. m.

४. इमत्य Ms.

५. added on the l. m.

६. य्य added on the l. m.

जगदुच्छिन्नदुरितप्रभवस्तादृशां भवः ।
प्रसाद[1]क्षतभक्तार्तिप्रसूतिरिव शाम्भवः ॥१४॥
स राजगुणसम्पत्त्या[2] जनितस्थिरभूदयः ।
तस्य नीतिप्रयोगेषु पुरोगतिरभूदयः[3] ॥ १५ ॥
यदिन्दुबिम्बे लावण्यं धत्ते तद्वदनेन[4] सः ।
स्थितिर्यथा दिलीपस्य तस्य तद्वदनेनसः[5] ॥ १६ ॥

जगदित्यादि ॥ तादृशां [ भवः ] प्रसादेन प्रसन्नतया क्षता भक्तानामार्तिप्रसूतिः पीडाप्रसवो येन स तथा । प्रसन्नेन तेन राज्ञा सेवकानां धनादिदानात् पीडापनीयत इत्यर्थः । शम्भोर्भवोऽपि क्षतपापः ( ? ) । तथा प्रसादेन[6] क्षता[6] भक्तानामार्तिः पीडा प्रसूतिरुत्पत्तिश्च येन स तथा, ईदृशश्च भवति ॥ १४ ॥

स राजेत्यादि ॥ स राजा राजगुणसम्पत्त्या राजगुणातिशयेन जनितः स्थिरो भुवः पृथिव्या उदय उत्कर्षो येन स[7] तथा[7] । तस्य राज्ञो नीतिप्रयोगेषु अयः शुभावहो विधिः पुरोगतिरभूत् । तेन राज्ञा यत्र यत्र नीतिः प्रयुज्यते तत्र [ तत्र ] शुभावहविधिं प्रथमं कृत्वैव प्रयु[8]ज्यत इत्यर्थः । 'अयः शुभावहो विधिः' इत्यमरः ( १।३।२७ ) ॥ १५ ॥

यदित्यादि ॥ इन्दुबिम्बे चन्द्रमण्डले यल्लावण्यं स राजा वदनेन तल्लावण्यं धत्ते । तस्य मुखं लावण्येन चन्द्रसदृशमित्यर्थः । चन्द्रस्य

---

१. प्रसादः B
२ The letter स is indistinct in A.
३. This line is missing in B.
४ °दनेव B.
५. This line is missing in B.
६. न क्षता added by another hand
७. Added by another hand.
८. Added in the l m.

शिशिरांशोरिव ज्योतिः क्षितौ विकसितं सितम् ।
तस्यातिशेते नृपतिं यशः सर्वनृगं[1] नृगम्[1] ॥ १७ ॥
भयादरक्षितस्तेन कः कृतस्वस्तिनास्ति ना ।
दयादमौ स्थितौ तस्मिन्राजनीव शिवौ शिवौ ॥ १८ ॥

सम्पूर्णकलत्वावगमाय बिम्बपदम् । 'बिम्बोऽस्त्री मण्डलं त्रिषु' इत्य- [ fol. 5a ] मरः ( १।२।१६ ) । दिलीपस्य रघुपितुर्यथा स्थिति-र्मर्यादा तस्य राज्ञस्तद्वत् सा इव । 'उपमाने वतिः' इति वतिप्रत्ययः ( का० २।६।१२) । किंभूतस्य तस्य—अनेनसः अपापस्य, नास्ति एनः पापमस्येति अनेनाः । 'स्वरेऽक्षरविपर्ययः' ( का० २।५।२३ ) इत्यक्षरविपर्ययः । 'मर्यादा धारणा स्थितिः' इत्यमरः ( २।८।२७ ) । 'कलुषं वृजिनैनोघमंहो दुरितदुष्कृतम्' इति च ( १।३।२३ ) ॥ १६ ॥

शिशिरामित्यादि ॥ तस्य राज्ञो यशो नृगं नृगनामानं नृपमतिशेते अतिक्रामति । नृग एव महायशाः, स राजा ततोऽपि यशसा महान् इत्यर्थः । किंभूतं यशः—क्षितौ पृथिव्यां विकसितं विस्तृतं तथा सितं धवलम् । तथा सर्वनृगं सर्वान् नॄन् गच्छतीति सर्वनृगम् । किमिव—शिशिरांशोश्चन्द्रस्य ज्योतिरिव । तदप्युक्तविशेषण-विशिष्टम् ॥ १७ ॥

भयादित्यादि ॥ तेन राज्ञा भयाद् अ[2]रक्षितः [को] ना कः पुरुषः अस्ति । तेन किंभूतेन—कृतक्षेमेण । 'स्वस्ति स्यात्[3] क्षेमपुण्यादौ' इत्यमरः (३।३।२४२) । तस्मिन् राज्ञि दयादमौ दयादण्डौ स्थितौ । तस्य साधौ दया असाधौ दण्ड इत्यर्थः । किंभूतौ—शिवौ शिवकरौ । कस्मिन्निव—शिवौ शिविनाम्नि राजनीव ॥ १८ ॥

---

१. मृगं in both places in B.

२. Added in the 1 m.

३ *Amarakosa* reads . स्वस्त्याशीः

यैर्गुणैश्चक्रवर्तित्वमाशाः सम्पूर्य याति ना[१] ।
सहजास्तस्य ते[२]ऽभूवंस्तुल्यकीर्तेर्ययातिना ॥ १९ ॥
कुर्वतीरुपलैस्तुङ्गैर्भुवनं[३] नीचमूर्ध्वजैः ।
तस्याचलालीरन्वेति चित्रा नागचमूर्ध्वजैः ॥ २० ॥
शुचानुद्धरतः सिद्धा[४]न्नृपां[५]स्तस्य कलिङ्गतः ।
साधुवादः क्षितिं सर्वां परिभूय कलिं गतः ॥ २१ ॥ but whose fame is said to have spread all over the world from Kalinga

यैरित्यादि ॥ ना पुरुषो यैर्गुणैराशा दिशः सम्पूर्य [ fol. 5b ] सम्यक् पूरयित्वा चक्रवर्तित्वं सार्वभौमत्वं याति, ते गुणास्तस्य राज्ञः सहजाः [६]स्वाभाविका अभूवन् । दृष्टान्तयति—य[६]यातिना राजविशेषेण तुल्यकीर्तेः सदृशयशसः ॥ १९ ॥

कुर्वतीरित्यादि ॥ तस्य राज्ञो नागचमूः हस्तिसेना अचलालीः पर्वतपंक्तीरन्वेति सदृशीकरोति । किंभूता—ध्वजैश्चित्रा । अचलालीः किंभूताः—ऊर्ध्वजैरुपरिजैः तुङ्गैरुच्चैः उपलैः भुवनं जगन्नीचं कुर्वतीः । ध्वजचित्रनागचमूरूपस्य वाक्यार्थस्य तुङ्गप्रस्तरोच्चशिरसा पर्वतेनोपमानाद् वाक्यार्थोपमा ॥ २० ॥

शुचेत्यादि ॥ तस्य राज्ञः साधुवादः कलिङ्गदेशादवधेः सर्वां क्षितिं गतः, सर्वपृथिव्यामेव साधुरिति भण्यत इत्यर्थः । किं कृत्वा—

१. This letter is indistinct in A

२. त्वे॰ A.

३ भवने B.

४. The word सिद्धान् is missing in B One can read स्तस्य written and erased here

५. नृपा॰ B.

६ This portion is restored by another hand ॰यति य॰ appears on the u. m.

यमनुस्मृत्य नश्यन्ति पापकृन्मानवासवः ।
क्रिययानुगतस्तेन स्थिरसत्त्वेन वासवः ॥२२॥
श्रमार्तस्येव मरुषु स्फुरन्मीनविमत् सरः ।
सन्तापं श[1]मयामास भुवनस्य विमत्सरः ॥२३॥

कलिं चतुर्थयुगं[2] परिभूय अतिक्रम्य[3] । कलौ[3] हि कस्यचित्साधुवादो न बहिर्भवति, अस्य तु सर्वामेव पृथ्वीं गत इति कलिपरिभवः । किंभूतस्य—शुचा शोकेन सिद्धान्नृपतीन् अनुद्धरतः अनुन्मूलयतः[4] । अयमेतादृशो राजा मयोन्मूलयितव्य इति शोकेनैव महान्तोऽपि नृपास्तेन नोन्मूलिता इति शक्तौ क्षमा प्रतिपादिता । अतः साधुवाद उचित इत्यर्थः । अनेन श्लोकेन तस्य [fol. 6a] कलिङ्गेश्वरत्वं च ध्वनितम् ॥२१॥

यमित्यादि ॥ यं राजानमनुस्मृत्य स्मृत्वा पापकृतां मानवानामसवः प्राणा नश्यन्ति । यं स्मृत्वैव पापकारिणोऽम्रियन्त[5] इत्यर्थः । एवंभूतेन तेन राज्ञा वासव इन्द्रः क्रियया कर्मणा अनुगतः सदृशीकृतः । अनुपूर्वो गत्यर्थधातुः सादृश्यवाचको भवति । किंभूतेन तेन—स्थिरसत्त्वेन अविचलसत्त्वगुणेन । यद्वा स्थिराणि स्वजात्युचितार्थजीवीनि सत्त्वानि प्राणिनो यस्मादीदृशेन ॥२२॥

श्रमार्तस्येति ॥ स राजा भुवनस्य जगतस्तापं शमयामास अखण्डयत् । किंभूतः—विमत्सरः विगतान्यशुभद्वेषः । 'मत्सरोऽन्य-

---

१. स० B

२. Ms. reads चतुर्थगुणां, but the reading as given above is taken from m. g A which reproduces the whole commentary on this verse.

३. This reading is taken from m g A Our Ms. of the commentary is corrupt here and reads for these two words अतिवीर्यबलो.

४. य is supplied in the u. m

५. य is added in the u. m.

तमिच्छति नृपं बुद्ध्या यः[1] स्तोतुमविशालया ।
स वाञ्छत्या[2]तपत्राणं करिणामविशालया ॥२४॥

तस्य सम्भृतसत्कीर्तेरजहन्नीतिवर्मणः ।
विनोदार्थमिदं काव्यं प्रवृत्तं नीतिवर्मणः ॥२५॥

The poem is composed by Nītivarman for the delectation of this king.

शुभद्वेषे' इत्यमरः (३।३।१७२) । मरुषु निर्जलस्थलेषु श्रमार्तस्य जनस्य सरस्तडाग इव । किंभूतम्—स्फुरन्मीनविमत्, स्फुरन् विलसन् मीनो मत्स्यो विः पक्षी तद्युक्तम् । अत्र मतुपं विनापि अस्त्यर्थस्य प्रतीतेर्भूम्नि प्रशंसायां मतुप्[3] (का० २।६।१५ वृ०) ॥२३॥

तमि[4]त्यादि ॥ तं नृपम् अविशालया अल्पया बुद्ध्या यो जनः स्तोतुमिच्छति सोऽविशालया भेटकगृहेण करिणां हस्तिनाम् आतपत्राणं रौद्राद्रक्षणं वाञ्छति । यथा भेटकगृहेण करिणामातपत्राणमशक्यं तथाल्पया बुद्ध्या तस्य स्तवोऽप्यशक्य इत्यर्थः ॥२४॥

[fol. 6b] तस्येत्यादि ॥ एवंभूतविशेषणविशिष्टस्य तस्य राज्ञो विनोदाय विलासाय नीतिवर्मणो नीतिवर्मनाम्नः कवेरिदं काव्यं प्रवृत्तम् । तस्य विनोदार्थमिदं काव्यं नीतिवर्मकविना विधीयत इत्यर्थः । तस्य किंविशिष्टस्य—सम्भृतसत्कीर्तेः धृतसद्यशसः । तथा अजहन्नीतिवर्मणः, अजहद् अत्यजन्नीतिरूपं वर्म कवचं यस्य स तथा । नीतिरूपेण कवचेन स राजा न त्यज्यत इत्यर्थः । नीतियुक्तस्याजेयत्वान्नीतेर्वर्मत्वम् । यद्वा अजहती अत्यजती नीतिवर्मणी यस्य स तथा । स राजा नीत्या वर्मणा च न त्यज्यत इत्यर्थः ॥२५॥

---

१. य without visarga in A and B
२. काङ्क्षत्या. B.
३. प्रशंसापम्वातुप् Ms.
४ Ms. तपमि, of which प is added in the l. m.

जनयति[१] रिपुसंहतिं समग्रामवनिपतौ चरितैः प्रभावहीनाम् ।
क्षितिरियमचला बभूव तस्मिन्नपरिमितात्मनि व[२] प्रभावहीनाम् ॥२६॥

कृतमतिरनुरञ्जन[३]क्षमायाः
सुभगतया प्रथयन् फलं क्षमायाः[४] ।

Conclusion of the panegyric of the king

छन्दोभेदेन सर्गा[५]न्तं प्रकटयति—जनयतीत्यादि ॥ तस्मिन्नर-पतौ इयं क्षितिः पृथ्वी अचला बभूव । तं पतिं विहाय भूमिर्नान्यं गतेत्यर्थः । किंभूते—समग्रां रिपुसंहतिं शत्रुश्रेणीं प्रभावहीनां जन-यति । पुनः किंभूते—अपरिमितात्मनि इयत्तयानवधारित-बुद्धौ । दृष्टान्तमाह—अहीनां[६] सर्पाणां प्रभौ व वासुकाविव । तत्र पृथिव्याः स्थिरत्वं प्रसिद्धमेव । इवार्थे व-शब्दः । 'आत्मा यत्नो धृति-बु[७]द्धिः प्र[८]भावो ब्रह्म वर्ष्म च' इत्यमरः ( ३।३।१०८ )। पुष्पिताग्रा-च्छन्दः ॥२६॥

कृतेत्यादि ॥ [fol. 7a] स राजा नृपगुणैर्विपक्षमायाः शत्रूणां कैतवानि अजयत् । किंभूतः—कृतमतिः कृतबुद्धिः । किं कुर्वन्—क्षमायाः क्षान्तेः फलं सुभगतया सु[८]श्रीकत्वेन प्रथयन् ख्यापयन् । सु[८]श्रीकत्वमेव क्षमायाः फलम् । किंभूतायाः क्षमायाः—अनुरञ्जन-

---

१ जनयति B
२ This word is missing in B.
३ अनुरञ्जयन् B.
४ B reads this line as : कुलसुभयतया प्रथयन् क्षमायाः.
५ °दा° Ms.
६ °नां is restored in the l. m.
७ स्व° in *Amarakośa*.
८ The letter may be स or स्व in Ms.

प्रियहितमुपपालयन्[1] क्षमायाः[2]
स नृपगुणैरजयद्विपक्षमायाः ॥२७॥

इति नीतिवर्मकृतौ[3] कीचकवधे प्रथमः सर्गः ॥

क्षमायाः, अनुरञ्जने अर्थात् प्रजानामनुरञ्जने क्षमायाः शक्तायाः, हिताधारात्[4] । तथा क्षमायाः पृथिव्याः प्रियं हितं चोपपालयन् । दुष्टवधादिना [भा]रावतारणात् प्रियकरणम्, यज्ञादिना वृष्टिकरणात्[5] सम्पन्नशस्यकरणम् । यद्वा प्रियेण स्वामिना यत् हितं क्रियते तत् कुर्वन् । यथा स्वामिना स्वो पाल्यते इत्यर्थः, तस्य पृथ्वीपतित्वात्[6] । 'क्षितिक्षान्त्योः क्षमा युक्ते[7] क्षमं शक्ते हिते त्रिषु' इत्यमरः (३।३।१४२) । इदमपि पुष्पिताग्राच्छन्दः ॥२७॥

इति श्रीजनार्दनसेनविरचितायां तत्त्वप्रकाशिकायां कीचकवधटीकायां प्रथमः सर्गः ॥

---

१. उपपादयन् A. and B The reading of the text here follows commentary.

२. क्षमायाः omitted in B

३. B. omits this phrase

४. हितावारा Ms.

५. विष्टि° Ms.

६. पाति° Ms

७. नु° Ms.

## द्वितीयः सर्गः ।

किं तत्काव्यमुदारोऽर्थो यत्र सद्भिरकीर्तितः ।
मया कृतं तत्क्रियते यत्त्रसद्भिरकीर्तितः[1] ॥१॥
अथाश्रिता मत्स्यपतिं छन्नाः[2] प्राकृतचेष्टया ।
कृष्णया सहिताः पार्थाः कीर्त्या जगति चेष्टया ॥२॥

Commencement of the story.

The Pāndavas at the court of Virāṭa.

इदानीमात्मनः काव्यमाहात्म्यं प्रतिपादयति---किं तदित्यादि ॥ यत्र काव्ये सद्भिः पण्डितैरुदारोऽर्थो महान् अभिधेयोऽकीर्तितः न कथितः, तत् किं काव्यम्, अपितु काव्यमेव न भवतीत्यर्थः । अकीर्तितः त्रसद्भिरयशसो भीतैर्यदीदृशं[3] काव्यं कृतं [fol. 7b] मया तत्तादृशं काव्यं क्रियत इति महाकविच्छायानुसरणेनात्मनो विनयप्रावीण्ये प्रतिपादिते काव्यस्य च निर्दोषत्वं प्रतिपादितम् । 'सन् सुधीः कोविदो बुधः' इत्यमरः (२।३।५) ॥१॥

अथेत्यादि ॥ अथ-शब्दो वर्णनीयकथारम्भे । पार्थाः पृथायाः कुन्त्या अपत्यानि युधिष्ठिरादयो मत्स्यपतिं मत्स्यदेशस्य राजानं विराटमाश्रिताः । नकुलसहदेवयोरपि कुन्त्याः पोषितत्वात्पार्थत्वम् । शैशव एव तयोर्माता माद्री मृगव्यवायनिधनासादितविपदं भर्तारमनुममारेति पुराणकथा । किंभूताः—प्राकृतानां साधारणजनाना

---

१. B. reads this line as मयैतत्क्रियते यत्र तच्च सद्भिरकीर्तितः ।
२. B. reads श्रिता मत्स्यपतिं छन्नाः कीर्त्या ।
३. यथेदृशं Ms.

सु[1]शिल्यान्युपजीवन्तः संप्राप्तप्रतिमानना: ।
सुखमूषुर[2]विज्ञातास्ते शशिप्रतिमानना: ॥३॥
साक्षाद्भूरिव सद्वृत्तवर्णा[3]श्रमचतुष्टया ।
ददृशे महिषी तेषां स्त्रीभिर्देव्या च तुष्टया ॥४॥

Description of Draupadī as a companion to Virāṭa's wife

चेष्टया कर्मणा छन्ना: संवृता: । अज्ञातवासवर्षे युधिष्ठिर: कङ्कनाम्ना द्यूतरत: सभास्तार आसीत्, भीम: सूपकार:, अर्जुन: षण्डरूप: कन्यानर्त्तक:, नकुलोऽश्ववैद्य:, सहदेवो गोवैद्य: द्रौपदी विराटपत्न्या: सुदेष्णाया: केशवेशरचनाविलेपन[4]पेषणादिकारिणीति स्वस्वकर्मभिश्छन्ना: । पुन: किंभूता:—कृष्णया द्रौपद्या कीर्त्या च सहिता: । छन्ना इति सम्बन्ध: । किंभूतया—जगति इष्टया सर्वैर्वाञ्छितया । तादृश्यौ कीर्तिकामिन्यौ सर्व एव वाञ्छतीत्यर्थ: । 'प्राकृतस्तु पृथग्जन:' इत्यमर: (२।१०।१६) । [fol. 8a] 'मङ्गलानन्तरारम्भप्रश्नकार्येष्वथो[5] अथ' इति [च] (३।३।२४८) ॥२॥

सुशिल्पानीत्यादि ॥ सुशिल्पानि शोभनशिल्पानि । स्वकार-पाठे स्वाभिमतशिल्पानि वा । उपजीवन्त: वर्धयन्तस्ते युधिष्ठिरादय: सुखं यथा स्यात्तथा ऊ[षु:][6] तत्र स्थिता: । किंभूता:—संप्राप्तप्रतिमानना: सम्यक् प्राप्ता प्रत्येकं मानना यै: ईदृशा: । तथा अविज्ञाता: युधिष्ठिरादित्वेन[7] केनचिदचिह्निता: । तथा शशिप्रतिमानना: चन्द्रसदृशवदना: ॥३॥

साक्षादित्यादि । तेषां महिषी राज्ञी तु[ष्ट]या प्रीतया देव्या

१ स्व॰ A.
२ ऊषु: सुखम॰ B.
३ ॰वर्ण॰ B.
४ ॰लेपनी॰ Ms.
५ *Amarakośa* reads : कार्त्स्न्यें॰
६ Space for one letter is left here in Ms.
७ यवि॰ for युधि॰ Ms.

चन्द्रबिम्बमिवासन्ने घने स्फुरितविद्युति[१] ।
तस्या मुखे मुखं तासां जातमत्यन्तविद्युति ॥ ५ ॥
गुणैराकृष्यमाणानां रक्तपुष्करहस्तया ।
बभूव राजदाराणां[२] न जातु विरहस्तया ॥ ६ ॥

सुदेष्णया, चकारात् स्त्रीभिरन्याभिरपि [ ददृशे ] दृष्टा[३] । उपमानमाह—साक्षात् प्रत्यक्षा भूः पृथ्वी इव । किंभूता—सद्वृत्तवर्णाश्रमच[तु]ष्टया । भूपक्षे— सद्वृत्तं [४]सच्चरित्रं वर्णानां ब्रह्मक्षत्रियवैश्यशूद्राणामाश्रमाणां ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां च चतुष्टयं यस्यां सा तथा । द्रौपदीपक्षे—सद्वृत्तं सुपिष्टं वर्णानां शुक्लादीनाम् आश्रमचतुष्टयं श्वेतपीतनीललोहितवर्णकरूपं यया सा तथा । 'कृताभिषेका महिषी' इत्यमरः ( २।६।५ ) 'देवी कृताभिषेकायाम्' इति च ( १।७।१३ ) ॥ ४ ॥

चन्द्रेत्यादि ॥ तस्या द्रौपद्या मुखे आसन्ने समीपवर्तिनि सति तासामन्तःपुरस्त्रीणां मुखम् अत्यन्तविद्युति अतिशयविगतशोभं [fol. 8b] भं जातम् । उपमानमाह —घने मेघे[५] आसन्ने सति चन्द्रबिम्बमिव। किंभूते—स्फुरितविद्युति, स्फुरिता विलसन्ती विद्युद्यत्र ईदृशे। चन्द्रादपि विद्युता[६]मतिशयकान्तिमत्त्वात् ॥ ५ ॥

गुणैरित्यादि ॥ राजदाराणां सुदेष्णाया[ः] सर्वासामेव वा तया द्रौपद्या स[ह] जातु कदाचिदपि विरहो न बभूव । राजदारास्तं न तत्यजुरित्यर्थः। किंभूतानाम्—गुणैः अर्थात् तस्या एव शीलसौन्दर्यादि-

---

१. स्फुरितित° B
२. द्वारा° B
३. तुष्टा MS.
४. MS has घ (?) before this
५. °घे is corrected in u. m
६. °द्यु° corrected in u m

सा कीर्तिरिव पार्थानामाक्रान्तमकरालया ।
तुल्याध्वरानल[१]रुचा तनुधूमकरालया[२] ॥ ७ ॥
सरोजश्रीरिवाखिन्ना महाकमलिनीलया ।
कुर्यादनुत्सुकं कृष्णा[३] वेण्या कमलिनीलया ॥ ८ ॥

भिराकृष्यमाणानामात्मवशीक्रियमाणानाम् । अन्यदपि किञ्चिद् गुण-वज्जनैराकृष्यते[४] (?) । तया किंभूतया—रक्तपुष्करहस्तया । रक्तं लोहितं यत्पुष्करं पद्मं[५] तत्सदृशहस्तया ॥ ६ ॥

सेत्यादि ॥ सा द्रौपदी पार्थानां युधिष्ठिरादीनां कीर्तिरिव । किंभूता—आक्रान्तमकरालया[१] । द्रौपदीपक्षे—आक्रान्तः गन्धादिपेषणार्थं शिला-खण्डो यया सा तथा ; कीर्तिपक्षे—आक्रान्तो मकरालयः समुद्रो यया ईदृशी, पारगामिणीत्यर्थः । सा पुनः किंभूता—अध्वरानलरुचा यज्ञा-ग्निदीप्त्या तुल्या सदृशी । किंभूतया—तनुधूमकरालया, तनुनाल्पेन धूमेन करालया दन्तुरया[६] । तस्या अपि सहजतेजस्विन्याः कुरुकुल-विनाशप्रतिज्ञानिबद्धया वे[fol. 9a ]ण्या अपमानमलिनया कराल-त्वम् । 'पेषणार्थं शिलाखंडं मकरालय उच्यते । पद्मावल्यामपि प्रोक्तः सिन्धौ च मकरालयः ॥' इति विश्वः । 'करालो दन्तुरे तुङ्गे'[७] इत्यमरः (३।३।२०४) ॥ ७ ॥

सरोजेत्यादि ॥ कृष्णा द्रौपदी कं जनं वेण्या केशरचनाविशेषेण अनुत्सुकं कुर्यात्, सर्वमेव जनमुत्सुकं करोतीत्यर्थः । किंभूतया वेण्या—

१. °धरानन° B
२. Here A inserts तत्रापश्यत् (śl 9) and strikes it off
३. कृष्टा B
४. गुणेनवजनैराकृष्यते (?) MS.
५. MS inserts a redundant त् after this.
६. MS दनुङ्गया (or दत्तङ्गया) तन्वता, (or तनुना), and line is drawn over space left after this phrase and तस्याः ।
७. नन्तुरे (or °त्रे) ज्ञ° MS.

तत्रापश्यत्कदाचित्तां सूतयोनिरयोनिजाम् ।
जहौ शान्तिं च[1] दुर्वारचित्तयोनिरयो निजाम् ॥९॥ Kīcaka sees her

वीक्ष्य तां तादृशीं सुस्थः स्याद्विवेकी[2] च कः क्षितौ ।
अतो[3]ऽभिरेमे तत्प्राप्तौ प्राणानां कीचकः क्षितौ ॥ १० ॥

अलिनीलया भ्रमरवन्नीलवर्णया । केव—सरोजश्रीरिव पद्म-लक्ष्मीरिव । अखिन्ना अक्लिष्टा । तथा कमलिनीलया बृहत्तडागाश्रया, तडागस्थपद्मस्यैवाक्लिष्टत्वात् । द्रौपद्यास्तु तादृशाया अप्य[4]क्लिष्टतया सौन्दर्यातिशयः प्रतिपादितः ॥ ८ ॥

तत्रेत्यादि ॥ तत्र सूतयोनिः सूतः क्षत्रिया[द्] ब्राह्मण्यां जातो जातिविशेषो योनिर्यस्य स तथा [ईदृशः] कीचकः कस्मिंश्चित्काले तां द्रौपदीमपश्यत् । किंभूताम्—अयोनिजाम्, अग्निजातत्वात् । न केवलमपश्यत्, निजां सहजां शान्तिं च जहौ तत्याज । अनिजां वा. तस्य सहजाशान्तत्वादेव दर्शनमात्राच्छान्तिरप[5]गता । किंभूतः—दुर्वारचित्तयोनिरयः । दुर्वारो दुःखेन वारणीयश्चित्तयोनेः कामस्य रयो वेगो यत्र स तथा । 'ब्राह्मण्यां क्षत्रियात्सूतः' इत्यमरः (२ । १० । ३) ॥ ९ ॥

वीक्ष्येत्यादि ॥ तादृ[fol. 9b]शीं तां तथारूपां द्रौपदीं वीक्ष्य दृष्ट्वा, तां प्रसिद्धरूपां द्रौपदीं तादृशीं सैरन्ध्रीत्वेनावस्थितां वा वीक्ष्य, क्षितौ पृथिव्यां विवेकी च को[6] जनः सुस्थः स्यात्, अपि तु न कोऽपि । अतो हेतोः कीचको विरा[ट]श्यालकः तत्प्राप्तौ द्रौपदीप्राप्तिविषये

---

१. शान्तिं जहौ स B
२. स्याद्विविवेकी B.
३. यतो B
४. तादृशायामप्य MS
५. MS has a redundant र after प.
६ MS. has a redundant व after this

स्वसारमवलम्ब्याशु[1] स्वसार[2]मुपजप्य ताम् ।
स चक्रे मदिराहारीं सचक्रे राजनि स्थिते ॥ ११ ॥

and persuades his sister to let Draupadī fetch wine for him.

ततस्तदर्थं तत्स्वस्रा[3] मद्य[4]मद्यानयेति सा ।
न किंचिदूचेऽभिहिता श्रुत्वाश्रु त्वातुरासृजत् ॥ १२ ॥

Draupadī's distress

अभिरेमे[5] अभिरतो बभूव । प्राणानां क्षितौ प्राणानां क्षितिं क्षयमनादृत्य । अनादरे सप्तमी ॥ १० ॥

स्वसारमित्यादि ॥ स कीचकस्तां द्रौपदीं मदिराहारीं मद्यानयनकारिणीं चक्रे । अन्तर्भूतेनर्थत्वात् ( का॰ ३।२।६ ) कारितवान् इत्यर्थः । यतस्तद्भगिन्येव छलेन तां तद्गृहं प्रास्थापयदिति पुराणकथा । किं कृत्वा—स्वसारमात्मबलमव[6]लम्ब्याश्रित्य । तथा तां स्वसारं भगिनीमुपजप्य भेदयित्वा, तदर्थं शिक्षयित्वेति यावत् । राजनि विराटे सचक्रे स्थिते सत्यपि, राजचक्रेणामात्यादिना सहितं राजानमनादृ-[त्ये]त्यर्थः । द्रौपदी कीचकेन सान्त्वपूर्वं प्रार्थितापि यदा तद्वशगा नासीत्, तदा तेनोपजप्ता तद्भगिनी मदिराप्रापणच्छलेन तां तत्रैव प्रस्थापितवती, युगभेदादागमभेदेनेयं कथा । विराटपर्वणि ( स्टगीकर-सम्पादिते, अ० १५, श्लो॰ ६-१०) सुदेष्णा स्वार्थं मदिराप्रापणच्छलेनैव तां प्रस्थापितवतीति [ fol. 10a ] कथा ॥ ११ ॥

तत इत्यादि ॥ ततः अनन्तरं सा द्रौपदी[7] तत्स्वस्रा[8] कीचक-

---

१ °वलद्याथ A.
२. स्वर्सा A
३. स्वस्रा is indistinct in A
४. मद्य missing in A
५. °अभिधामे MS
६. °बलमा° for °बलमव° MS
७. द्रौ० corrected in u. m
८. °स्रा corrected in u. m.

या नोत्सृष्टा[1] श्रिया भृत्यैः शचीव स्तूयमानया ।
साऽभूत्प्रेष्या विधीच्छानां[2] मूर्त्यावस्तूयमानया ॥ १३ ॥
विशेषयन्ती प्रत्यङ्गैरशोकान्नवपल्लवान् ।
पदे पदेऽश्रुप्रभवानुष्णोष्णानवपल्लवान्[3] ॥ १४ ॥

भगिन्या सुदेष्णया[4] कीचकार्थं मद्यमान[5]येति अभिहिता उक्ता सती किंचिन्न ऊचे उक्तवती । श्रुत्वा तु पुनः अश्रु क्रन्दनजलमसृजत् त्यक्तवती, चक्रन्देत्यर्थः । किंभूता – आतुरा आर्ता ॥ १२ ॥

येत्यादि ॥ या द्रौपदी श्रिया सम्पदा नोत्सृष्टा न त्यक्ता । किंभूतया—भृत्यैः सेवकैः स्तूयमानया क्रियमाणस्तवया । केव—शचीव । सा विधीच्छानां विधेर्विधातुर्नियतेर्वा अभिलाषाणां मूर्त्या काठिन्येन प्रेष्या दासी अभूत् । तादृशस्य स्त्रीरत्नस्य प्रेष्यत्वं यत्कारयति अतो विधीच्छायाः काठिन्यम् । मूर्त्या किंभूतया—अवस्तूयमानया अवस्तु इव आचरन्त्या । आय्य[6]न्तादवस्तुशब्दादानश् ( का° ३।२।८; ४।४।२ )। अथवा, स्तूयमानया सर्वजनक्रियमाणस्तवया श्रिया हेतुभूतया भृत्यैर्न उत्सृष्टा दासैर्न त्यक्ता । सा[7] च[7] स्वयं दासी बभूवेति श्रिया भृत्यैरुभाभ्यामेव वा नोत्सृष्टा । चकारं विनापि च[8]स्या[व]गतिर्भवत्येव । 'मूर्तिः काठिन्यकाययोः' इत्यमरः ( ३।३।६६ ) ॥ १३ ॥

विशेष[य]न्तीत्यादि ॥ सा द्रौपदी पदे पदे अश्रुप्रभवान् लवान् क्रन्दनजलजातान् विन्दून् अवपत् उप्तवती । किंभूतान्—

१ मानात्सृष्टा B.
२. विधीष्टानां B.
३ °नुष्टोष्टा° B.
४. From भगि° to °ष्णया added in the text by another hand
५ मद्यमा० added in u m.
६ °र्य्यं MS.
७. MS has सव for these two words
८. षा° MS

निःश्वासैरुद्धमद्बाष्पैः[१] संभिन्नत्रिवलीलया ।
कथंचिद्भवनं तस्य[२] ययौ हंसीव लीलया ॥१५॥
अथ प्रकृतिमास्थाय[३] कामिनामसतां स ताम् ।
स्निग्धस्निग्धमुवाचेदं विविक्ते दयितायिता[४]॥१६॥

Kīcaka's overtures to her

उष्णोष्णान्, प्रत्युष्णान् उष्णप्रकारान् वा, शोकजत्वात् । किंभूता—प्र[fol. 10b]त्यङ्गैः प्रत्यवयवैर्नवपल्लवान्[५] नवः पल्लवः किशलयो यत्र ईदृशानशोकान्[६] विशेषयन्ती । ततोऽपि लोहितकोमलहस्तपादादिकेत्यर्थः ॥१४॥

निःश्वा॰सैरिति ॥ द्रौपदी कथंचित् कष्टसृष्ट्या तस्य कीचकस्य भवनं गृहं ययौ । केव—लीलया गतिविषयकलावण्येन हंसीव । किंभूता सा—निःश्वासैः शोकजनितदीर्घश्वासवायुभिः संभिन्नो विश्लेषितस्त्रिवल्या उदरस्थितवलित्रयस्य लयः संश्लेषो यस्याः सा तथा । किंभूतैर्निःश्वासैः—उद्धमद्बाष्पैः[७] उद्धमन्[८] अग्निसंयोगमिव कारयन् बाष्प ऊष्मा यत्र ईदृशैः । 'ध्मा शब्दाग्निसंयोगयोः' (धा० १।९७४) इत्यस्य रूपम् । उद्गमन्निति पाठे उद्गमन्नुद्गिरन् बाष्पो यत्र । 'ऊष्माश्रुणोर्भवेद्बाष्पः' इति रन्तिः ॥१५॥

अव्यपेतयमके श्लोकान्तरमाह—अथेत्यादि ॥ अथानन्तरं स कीचकः कामिनां कामुकानाम् अतएव असतामसाधूनां प्रकृतिं स्वभाव-

१. The commentary reads उद्धमद्बाष्पैः but notices this reading ST. agrees with our reading
२. कथंचित्तस्य भवनं B The word भवनं is partly effaced in A
३. ॰माश्रित्य B; ॰मासाद्य A.
४. ॰यितां B
५. ल्ल corrected in u. m.
६. नः शकोन MS.
७. श्वा added in u m.
८. ॰द्ग॰ MS.

न कृत्यमनया भद्रे सुरया सुरया मम ।
यस्य बाणा[1]स्त्वद[2]ङ्गानि विदूध्यतो विदूध्यतो रुजम् ॥१७॥
दहति त्वदलाभेन मन्मथो मामवारितः ।
तृष्णा[3]क्रान्तस्य दयिते कुतः शान्तिरवारितः ॥१८॥

मास्थायाभित्य विविक्ते विजनस्थले [स्निग्ध]स्निग्धमतिप्रियं यथा स्यात्तथा इदं वक्ष्यमाणमुवाच । किंभूतः—दयितायिता दयितः स्वामीवाचरितुं शीलमस्येति दयित-शब्दादाचारार्थे[4] क्यङ्[5] ॥१६॥

नेत्यादि ॥ हे भद्रे सुन्दरि अनया सुरया मद्येन न कृत्यं कार्यं नास्ति । अतोऽस्मात् का[fol. 11a]रणात् मम रुजं पीडां विद्धि जानीहि । अतः कुतः—यस्य बाणाः सुरयाः अतिवेगाः । किंभूतस्य—त्वत् त्वामासाद्य अङ्गानि, अर्थात् ममैव, विदूध्यतः[6] । त्वदिति ल्यब्[6]लोपे पञ्चमी । यद्वा विदूध्यतो वेधनं कुर्वतो यस्य त्वदङ्गानि बाणाः, सोऽर्थात् कामः । वामावयवशरत्वात् । अतोऽस्मत्सकाशाद् रुजं पीडां विद्धि ॥१७॥

दहतीत्यादि ॥ हे दयिते प्रि[ये] त्वदलाभेन त्वदप्राप्त्या मन्मथः कामो मां दहति तापयति । किंभूतः—अवारितः, नास्ति वारितं वारणं यस्य स तथा । केनचिदवारितो वा । अन्याः स्त्रियस्तव तापं कथं नापनयन्तीत्यत आह—तृष्णा[7]क्रान्तस्य पिपासापीडितस्य जनस्य अवारितो वारिव्यतिरिक्तात् कुतः शान्तिः स्वान्तम्[8] (?) ।

---

१ बाला॰ (?) A
२. ॰स्तद॰ B.
३ तृषा॰ A
४. ॰चार्थके MS.
५ MS. क्यं (added in another hand).
६. This portion (विदूध्य...ल्यप्)added in another hand.
७. दृष्वा॰ MS.
८. स्वान्त्यं MS.

सहोद्यानेन गणिता वापी[1] फुल्लारविन्दता ।
विषं मया[2] त्वदङ्गानां[3] प्राप्तिमङ्गैरविन्दता ॥१९॥
धन्यास्त्वया निरीक्ष्यन्ते चक्षुषानेन देहिनः ।
चक्षुरौत्सुक्यविशदं[4] मृदुभाषिणि[5] देहि नः ॥२०॥

पञ्चम्यां तृतीयायां वा तस् अन्यादित्वात्[6] (का० २।६।२८) । विना वारिणा यथा तृष्णा नापगच्छति तथा त्वया विना मम दाह इत्यर्थः ॥१८॥

सहेत्यादि[7] ॥ मया वाप्याः दीर्घिकायाः फुल्लारविन्दता विकच-कमलत्व[म्] उद्यानेन क्रीडावनेन सह विषं गणिता । वापीविकच-कमलत्व[म्] उद्यानमपि [च] विषमिव सम्भावितमित्यर्थः । मया किंभूतेन—अङ्गैर्निजावयवैस्त्वदङ्गानां प्राप्तिमविन्दता [fol. 11b]-ऽलभमानेन ॥१९॥

धन्येत्यादि ॥ हे मृदुभाषिणि कोमलालापशीले अनेन चक्षुषा त्वया धन्या देहिनो निरीक्ष्यन्ते दृश्यन्ते । प्राण्यादिपदमपहाय देहि-पदोपादाने देह-शब्दात्प्रशंसायां[8] मतुबर्थेनेन्प्रत्ययेन (का० २।६।१५) देहस्य प्रशस्यता[9] सूचिता । अतो हेतोर्नोऽस्मभ्यम् औत्सु-

---

१. वाप्यः and °विन्दताः A.
२. त्वया B.
३. तदङ्गानां B.
४. °विषदं B.
५. The letter णि is dropped in A
६. अन्या MS.
७. देहमत्यादि MS.
८. प्राणं for प्रशं MS.
९. प्रशंसता MS.

इत्युद्विग्ना धिया[१] तस्य पापया वचसा च सा । Her anger and dismay.
निर्ययौ तद्गृहा[२]दुक्त्वा गिरोऽतिपरुषा रुषा ॥२१॥
कथं नागानुपस्थाय[३] तेषां कामवशा वशा ।
भजेदनिष्टप्रकृतिं रूक्षरोमखरं खरम् ॥२२॥

क्येनोत्कण्ठितत्वेन[४] विशदं निर्मलं चक्षुर्देहि । उत्कलिकाविमलेन लोचनेन मामालोकयेति भावः ॥२०॥

इतीत्यादि ॥ सा द्रौपदी तस्य कीचकस्य इति पापया पापरतया धिया बुद्ध्या पापरतेन वचसा च उद्विग्ना प्राप्तोद्वेगा सती रुषा क्रोधेन अतिपरुषातिनि[ष्ठु][५]रा गिरो वाच उक्त्वा तद्गृहात्तस्य मन्दिरान्निर्ययौ निष्क्रान्ता ॥२१॥

परुषोक्तिस्वरूपमाह—कथमित्यादि । वशा हस्तिनी[६] नागान् गजानुपस्थाय संसेव्य तेषां कामस्याभिलाषस्य वशा आयत्ता [त]-त्सम्बन्धिकुसुमशरपरतन्त्रा[७] वा सती अनिष्टप्रकृतिं निन्द्यस्वभावं रूक्षैः कर्कशै रोमभिः खरं कर्कशदेहं खरं गर्दभं भजेत् । अयमर्थः—महत्तरकरिवरप्रेमभरपरवशा करिणी यदि गर्दभं सेवते तदा मयापि ता[fol. 12a]दृशान् पतीन् विहाय भवान् सेवितव्य इति भावः । समासोक्तिरलंकारः । कवेरेव[८] वा इदं वाक्यम् ॥२२॥

---

१. धिय is corrected into धिया in A.

२. तद्ग्रहा° B.

३. नागामुप ° B.

४. औत्सक्येनात्कश्चितत्वेन MS.

५. Space left in MS. for one letter here.

६. हस्तिनीत्यादि MS

७. कुसुमकुरपरचन्द्रा MS.

८. कवे° added in another hand in MS.

सा निधूता[१] ततस्तेन कृष्णा[२] वल्लीव पुष्पिता ।
मोक्षिता तेन लोकानां[३] यश्च हेमवपुष्पिता ॥२३॥

Her rescue through the agency of Sūrya.

श्रियमिव परिपश्यतः[४] सदास्यां
कथमिव तां दधतीं क्रियां[५] सदास्याम् ।
स्व[६]युवतिर्ललितेन दूरमस्य
शमपहृतं मदनेन दूरमस्य ॥२४॥

सेत्यादि ॥ ततोऽनन्तरं सा द्रौपदी तेन कीचकेन निधूता परिभूता । केव—पुष्पिता संजातपुष्पा लतेव । पुष्पितां लतां यथा पुष्पप्रत्याशया धूनयन्ति तथा सापि तेन धूनितेत्यर्थः । मोचिता[७] त्याजिता च तेन । केन—यो लोकानां पिता, पालकत्वात् । हेमवपुः सुवर्णवद्वपुः सुवर्णमयवपुर्वा । आगमे हि भगवान् भास्वान् स्वर्णशरीरश्च[८] कथ्यते । हेम[व]पुष्पितेत्यत्र कस्कादित्वाद्विसर्जनीयस्य[९] सः (पा० ८।३।४८)। द्रौपदी कीचकनिकेतनगमनारम्भे भगवन्तं सतीनामवितारं सवितारमेव शरणं मनसा जगाम, सोऽपि भगवांस्तस्या भावमभिज्ञाय तद्रक्षणाय रक्ष एकं नियुक्तवान्, तेन च रक्षसा द्रौपदी मोचयित्वा कीचकः क्षितौ क्षिप्त इति विराटपर्वकथा (अ० १५, श्लो० १९-२०) ॥२३॥

छन्दोभेदेन सर्गच्छेदमावेदयति—श्रियमित्यादि ॥ अस्य कीचकस्य शं कल्याणं[१०] मदनेन कन्दर्पेण दूरमपहृतम् । किंभूतस्य—स्व[११]युवति

१. निगता B. २. कृष्टा B.
३. कालोनां B.
४. पश्यतः B. dropping परि॰, contrary to metre.
५. श्रियां B.
६. सु A.
७. मो॰ added in another hand in MS.
८. स्वर्णभारीर॰ MS.
९. कदा॰ MS.
१०. कल्पनं MS.
११. स्वव॰ MS

Insulted and grieving she repairs to the court of Virāṭa.

अथ नयनजलेन नदीयमाना
पितृपतये व्यसनेन दीयमाना ।
मनसि परिभवेन[1] वेपमाने
नृपति[2]सभामगमन्नवेऽपमाने ॥२५॥

इति नीतिवर्मविरचिते[3] कीचकवधे द्वितीयः सर्गः ॥

ललितेन स्वस्या युवतेर्विलासेन, दुःखेन रम्यत इति दूरमः तादृशस्य । 'ईषद् दुःसुषु कृच्छ्राकृच्छ्रार्थेषु' (का० ४।५।१०२) इति[4] खलु । तद्धृत-[5] हृदयत्वेनैव स्वयुवतिषु रति[6]विमुखस्य । तथा तां [fol. 12b] द्रौपदीं श्रियं लक्ष्मीमिव परिपश्यन: । किंभूताम्—सदास्यां सुमुखीम् । तथा कथमपि कष्टसृष्टया सदास्यां दासीत्वयुक्तां [क्रियां] परिचर्यारूपां दधतीं बिभ्राणाम् । पुष्पिताग्राच्छन्दः ॥२४॥

अथेत्यादि ॥ अथानन्तरं सा द्रौपदी नृपतेः[7] विराटस्य सभामगमत् । नवे प्रशस्तेऽपमाने[8] दासीत्वान्मानशून्ये मनसि परिभवेन तिरस्क्रि[य]या वेपमाने कम्पमाने सति । नवे तत्रापूर्वे अपमाने सति मनसि परिभवेन वेपमाने सति इति कश्चित्, तदसङ्गतम्, अपमानपरिभवयोर्भेदाभावात् । सा किंभूता—नयनजलैर्नदीयमाना[9] नदीवाचरन्ती । आयि-प्रत्ययः (का० ३।२।८) । सदा रुदतीत्यर्थः । तथा व्यसनेन दुःखेन कर्त्रा[10] पितृपतये यमाय दीयमाना, दुःखेन म्रियमाणेत्यर्थः । इदमपि पुष्पिताग्राच्छन्दः ॥२५॥

[इति] कीचकटीकायां द्वितीयः सर्गः ॥

---

१. ०भवेनन A. २ नृप B, contrary to metre
३. B. omits this phrase ४. ०कृच्छ्रात्रेषु स्वति MS.
५. तत्कृ० MS ६. रभि० MS.
७. नृपति MS. ८. ०स्तेवमाने MS.
९. ०लैर्मुदीय० MS.
१०. कर्ता MS.

## तृतीयः सर्गः

मत्स्यभक्तयातिनिभृतैः[1] कङ्कादिभिरुपासिताम् ।
करेणुरिव सन्तप्ता[2] तां बृहन्नलिनीं ययौ ॥१॥

She sees her husbands in the court of Virāṭa.

मत्स्येत्यादि ॥ पूर्वसर्गान्ते द्रौपदी नृपतिसभामगमदित्युक्तम्[3], अत्र सर्गेऽपि तदेवाहेति सर्गयोः सौसन्ध्यम् । प्रकरणाद् द्रौपदी पूर्वसर्गसमुद्दिष्टां सभां ययौ । तामेव विशिनष्टि[4] । किंभूताम्—कङ्कादिभिर्युधिष्ठिरादिभिरुपासितां सेविताम् । कङ्को युधिष्ठिरः[4], तदादिभिः । किंविशिष्टैः—मत्स्ये विराटे या भक्तिस्तया नि[fol. 13a]भृतैः, निर्धूत[5]विक्रमैरिति यावत् । पुनः किंविशिष्टां सभाम्—बृहन्नलया अर्जुनेन युक्ताम् । यद्यपि कङ्कादिष्वेव[6] बृहन्नलायाः प्रवेशस्तथापि मुख्यतया[7] पृथग्निर्देशः, पक्षान्तरश्लेषापेक्षया[8] च । सा किंभूता—सन्तप्ता । केव—करेणुरिव हस्तिनीव, यथा सन्तप्ता हस्तिनी बृहन्नलिनीं याति । बृहती नलिनी पद्मिनी यत्र सा बृहन्नलिनी सरसी । यद्वा बृहती चासौ नलिनी सरसी चेति समासः । बृहतीं नलिनीं पद्मषण्ड[9]मेव वा । 'नलिनी पद्मषण्डे स्यात्सरस्यामपि कीर्तिता' इति च रन्तिः[10] । अत्र पक्षे—कङ्कः पक्षिविशेषस्तत्प्रभृतिभिः पक्षिभिः सेविताम् । किंविशिष्टैः—मत्स्येषु या भक्तिर्भजनं तया निभृतैः निःशब्दपदन्यासादिभिः ॥१॥

---

१. °भक्ता° A. and B. २. संतप्तां B.
३. क्त added in l m.
४. यु added in l. m
५. °द्धत° MS.
६. °ष्वैव MS.
७. ख्य corrected in u. m.
८. श्लेषाः ये° MS.
९. °गयड° MS
१०. कीर्तितत्[?]विरन्तिः MS

दैवादपत्रमच्छायं फलार्थिभिरसेवितम् ।
सानुजं शाखिनमिव प्रियं वीक्ष्य रुरोद सा ॥२॥
क्षरतास्रेण[1] सदृशी सरिता चारुरोधसा ।
समं बाष्पेण चक्षूंषि दयितानां रुरोध सा ॥३॥
मूर्त्या भीमस्य कथिता विक्रमैरक्षमा यया ।
निश्चलत्वमसौ नीता सपत्नैरक्षमायया[2] ॥४॥

दैवादित्यादि ॥ सा द्रौपदी प्रियं युधिष्ठिरं वीक्ष्य रुरोद क्रन्दितवती । कमिव—शाखिनमिव । उभयमेव किंभूतम्—दैवाद्विधिवशाद् अपत्रं वाहनरहितम्, पक्षे दलरहितम् । पुनः किंभूतम्—अच्छायं कान्तिशून्यम्, पत्ररहितत्वात् । पुनः किंभूतम्—फलार्थिभिरसेवितम्, फलं सेवाफलमैश्वर्यं तत्प्रार्थिभिरनुपासितम् । वृक्षपक्षे फलं विख्यातमेव । सानुजं भीमादिभिः सहितम्, पक्षे पर्वतैकदेशजातम् । [fol. 13b] 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपम्' इत्यमरः (३।३।१५७)। 'स्नुः[3] प्रस्थः सानुरस्त्रियौ' [इति च (२।३।५)] ॥२॥

क्षरतेत्यादि ॥ सा द्रौपदी दयितानां भर्तॄणां युधिष्ठिरादीनां चक्षूंषि लोचनानि समं[4] युगप[त्] तत्तुल्यं वा, यथान्यस्तथा । बाष्पेणाश्रुणा रुरोध आवृतवती । रुदती सा तानप्यरोदयदित्यर्थः । किंभूता सा—क्षरता स्रवता[5] अस्रेण नेत्रजलेन करणभूतेन सरिता नद्या सदृशी। नद्या किंभूया—चारुरोधसा चारु शोभनं रोधस्तीरं यस्याः सा तथा तया । एतेन तस्या नितम्बा[6]दीनां शोभनत्वम् आक्षिप्तम् ॥३॥

मूर्त्येत्यादि ॥ विक्रमैः करणभूतैः भीमस्य यया मूर्त्या अक्षमा कथिता कोपः प्रकाशितः, असौ मूर्तिः अक्षमायया अक्षेषु पाशकेषु

१. °स्त्रेण B. २. सपत्नै° A
३ ग्नुः MS.
४. प्रसम MS.
५. अव ना MS.
६. °नितम्बान्वा° MS.

तया भिन्नमिव क्रोधादुच्छिन्नक्रूररक्षसा ।
तदवस्थापितं मन्त्रं पतिभक्त्या ररक्ष सा ॥५॥
ततः शोकेन गुरुणा दयितान् भृशमाहतान् ।
राजानमपदिश्येदं पुरा सदृशमाह तान् ॥६॥

Her speech with its *double entente*, levelled at Virāṭa and Yudhiṣṭhira simultaneously

या माया कपटं तेन करणभूतेन सपत्नैः शत्रुभिः निश्चलत्वं नीता प्रापिता ।'दुर्योधनो हि युधिष्ठिरादीन्[१] कपटपाशकेन जित्वा वनवासाज्ञातवासरूपां [अवस्थां ?] कारितवान्, अतो भीमः कीचकपदाहतां पत्नीं विलोक्यापि क्षान्तवानित्यर्थः । 'रिपौ वैरिसपत्नारिद्विषद्द्वेषण-[२] दुर्हृदः' इत्यमरः (२।८।१०) । 'पाशकेन्द्रिययो[३]रक्षः' इति विश्वः ॥४॥

तयेत्यादि ॥ सा द्रौपदी पत्युर्युधिष्ठि[fol.14a]रस्य भक्त्या तदवस्थापितं अर्थात्तस्यामेव कथितं मन्त्रमज्ञातवासरूपं गुप्तिवादं ररक्ष संवृतवती । किंभूतम्—तया भीमस्य मू[र्त्या][४] क्रोधाद् भिन्नं प्रकाशितमिव । किंभूतया—उच्छिन्नक्रूररक्षसा उन्मूलितघातुकराक्षसया । 'वेदभेदे गुप्तिवादे मन्त्रः पुंसि प्रकीर्तितः' इति मेदिनीकरः । 'नैरृतो यातुरक्षसी' इत्यमरः (१।१।६३) । 'नृशंसो घातुकः क्रूरः' इति च (३।१।४७) ॥५॥

तत इत्यादि ॥ प्रकरणाद् द्रौपदी राजानं विराटमपदिश्य लक्ष्यीकृत्य दयितान् भर्तॄन् पुरा आह जगाद । पुरा-योगे[५] 'प्रयोगतश्च' (का० ३।१।१७) इत्यनेन भूते[६] वर्तमाना । सदृशं विराटपक्षे च तुल्यं यथा स्यात् श्लेषांत्तथा जगादेत्यर्थः । उपदिश्येति पठोऽयुक्तः; व्याजार्थोऽपोपपदस्य[७] विशतेः, 'व्याजोऽपदेशो लक्ष्यं च' (अमर० १।७।३३)

१. यु added in l. m २. •द्विषादु• MS.
३. •क्षिययो• MS.
४. Space for one letter left here.
५. प्र for पु० MS.
६. दूते MS
७ •जार्थमुपो• MS.

चरितैरक्षितोयस्य जनोऽयं पात्रतां गतः ।
तव नित्यो[१]दिताशस्य[२] कर्तव्यं किमतः परम् ॥७॥

इत्यादिषु कोषेषु दर्शनात् । दयितान् किंभूतान्—गुरुणा महता शोकेन तस्या एव पराभवप्रभवेण आहतान् पीडितान् ॥६॥

चरितैरित्यादि ॥ विराटपक्षे—हे राजन्,तव चरितैश्चेष्टितैरयं जनः कीचकः अक्षितः अप्राप्तक्षय एव अयस्य शुभावहविधेः पात्रतां भाजनत्वं गतः प्राप्त इति वयम्; अन्ये तु एवं व्याचक्षते[३] [fol. 14b]—हे राजन्, यस्य तव चरितैरयं जनः कीचकः[रक्षितः][४] अतः परं त्वया[५] किं कर्तव्यम्, सर्वमेव सुष्ठु कृतम् । अस्तु तावदपराधिनस्तस्य क्षयः, त्वया पुनरयस्यैव पात्रतां प्रापितः[६] इत्युपहासः । पात्रतां कार्यस्य योग्यतां गत इति व्याचक्षते । व्याख्ययोस्तु विशेषः स्वधिया गवेषणीयः । तव किंभूतस्य— नित्योदिता[शा] उद[य]वाञ्छा यस्य । नित्यमुदयं[७] वाञ्छसि, तदनुरूपं कर्म न करोषीति ध्वनिः । नित्यमुदिता[८] सम्पन्ना आशा यस्य इत्यन्ये । युधिष्ठिरपक्षे—हे युधिष्ठिर तव चरितैः अक्षक्रीडादिभिरयं जनोऽहं अक्षितो यस्य नेत्रजलस्य पात्रतां गतः । तव दुश्चेष्टितैः सदैवाहं रोदिमीत्यर्थः। किंभूतो जनः नित्यः,पत्नीत्वाद् अव्यभिचारी[९]। अनित्या भृत्यादयस्तु प्रागेव परमाश्रितवन्तं भवन्तं तत्यजुरिति नित्यपदस्य ध्वनिः । तव किंभूतस्य—दिताशस्य । दिता खण्डिता आशा यस्य

१. नित्या॰ A.    २. दितामस्य B.

३ व्याप॰ MS.

४. Some word or words seem to have been dropped here though no lacuna is marked in MS.

५. तथा MS.

६ तद MS

७. ॰त्यर्थदयं MS.

८. त्यर्थदिता MS.

९. अव्यभिचारी MS.

भवतोऽत्यन्तसद्वृत्तो रक्षाकौशलसम्भृतम् ।
प्राप्तं मया शिवं नित्यमसूयाम्याश्रिता न ते ॥८॥

स तथा । उदयवाञ्छापि त्वयि न विद्यते । 'दिता' इति 'दोऽवखण्डने' (धा० ४।४०) धातुः, निष्ठायां 'द्यतिस्यतिमास्थां त्यगुणे' (का० ४।२।७६) इतीत्वम् । अतः परं मया किं कर्तव्यम् । त्वयि भर्तरि जीवति दुःखं प्राप्नुवन्त्या स्त्रिया मया रोदनाद् व्यतिरिक्तं किं कर्तव्य-[fol. 15a]मिति भावः । अन्ये तु त्वया किं कर्तव्यमिति व्याचक्षते । 'योग्यभाजनयोः पात्रम्' इत्यमरः (३।३।१७८) ॥७॥

भवत इत्यादि ॥ हे विराट अत्यन्तसद्वृत्तेः परमप्रशस्ताचाराद् भवतः सकाशात् नित्यं प्रत्यहमेव शिवं कल्याणं प्राप्तम् । किं भूतम्—रक्षाकौशलसम्भृतम्, रक्षणावेक्षणेषु यत्कौशलं तेन सम्भृतम् उपार्जितम् । द्रौपदी[1] किंभूता—आश्रिता शरणापन्ना । आश्रितेत्यत एव नाहम् अधिक्षिपामि, त्वं पुनस्त्वद्योग्यं कर्म कराण्येत्रेति भावः । पक्षे—हे युधिष्ठिर अत्यन्तसद्वृत्तेः अन्ते सीदन्तीति अन्तसदो नीचाः, अतिशयेन तेषामिव वृत्तिर्यस्य ईदृशस्य भवतस्तव अक्षाकौशलेन पाशकक्रीडानभिज्ञत्वेन[2] सम्भृतम् अशिवम् अकल्याणं प्राप्तम् । किंभूतम्—नित्यं चिरस्थायित्वात्[3] शाश्वतम् । अतस्ते तव आश्रिता अहं न असूयामि आत्मनोऽसून् प्राणान् न [इ]च्छामि । असूनिच्छति[4] असूयतीति 'नाम्नः आत्मेच्छायां यिन्' (का० ३।२।५) इति यिन्-प्रत्ययः । यद्वा आश्रिता आनतिः परस्मै नम्रता येन, हे ईदृश अहमसूयामि अर्थात् तुभ्यमेव द्रुह्यामीति[5] भावः ॥८॥

---

१ Added in another hand.
२. °क्रीडानअनभिज्ञत्वेन. MS.
३. यि corrected from इ in l. m.
४. असुमि० MS.
५. तुस्यमेव द्रुव्यामि MS.

संन्यस्तक्षितिरक्षेषु परेषु[1] कृतसाध्वसः ।
विमुक्तश्चापरागेण[2] त्वत्समो नृपतिः कुतः ॥९॥
कथं त्वया निन्द्यमिदं सदश्वसमवृत्तिना[3] ।
सभ्याचारपरेणाद्य कृतमत्राणमीदृशम् ॥१०॥

सं[4]न्यस्तेत्यादि ॥ त्वत्समो नृपतिः कुतः[5] कुत्र तव सदृशो राजा, कुत्रापि नास्तीत्युपहासः । किंविशिष्टः—परेषु कीचकादिषु कृतसाध्वसः धृतभयः । किंविशिष्टेषु—संन्यस्तक्षितिरक्षेषु, सम्यक् प्रकारेण न्यस्ता अर्पिता क्षितेः पृथिव्या रक्षा [fol 15b] ये[षु] । तैरेव क्षितिरक्षा क्रियत इति तेभ्यो भयम् । [स्वयं] रक्षितुमक्षमः परमाश्रित्य राज्यं करोषीति ध्वनिः । पुनः किंभूतः—अपरागेण विमुक्तः[6], अपकृष्टे विषये रागोऽनुरागस्तेन विमुक्तः, [यद्वा] परेषु शत्रुषु कृतं जनितं साध्वसं भयं येन स तथा । किंभूतेषु—संन्यस्ता अर्थात् त्वय्येवारोपिता क्षितिरक्षा यैः [तेषु] । तुभ्यं राज्यं दत्त्वा त्वामाश्रयन्त इत्यर्थः । किंभूतस्त्वम्—अपकृष्टो यो [रागः] विषयाभिलाषस्तेन विमुक्तः । युधिष्ठिरपक्षे—त्वत्समो नृपतिः कुतः, तव सदृशो निन्द्यो राजा नास्तीत्यर्थः । किंभूतः—अक्षेषु पाशकेषु संन्यस्तक्षितिः । पुनः किंभूतः—परेषां शत्रूणामिषुभिर्बाणैः विहितं साध्वसं यस्य । चापो धनुस्तत्र रागः अनुरागस्तेन विमुक्तः । धनुर्विद्यानभिज्ञ[7] इत्यर्थः ॥९॥

कथमित्यादि ॥ हे विराट त्वया ईदृशमत्राणम् अपालनम्,

१ Omitted in A
२ °पवर्गेण B
३ सदृस्यसमवर्तिना B
४. स for सं in this word throughout in this paragraph
५. Here MS. inserts क्रियत इति by mistake the sentence पृथिव्या रक्षा येषु तैरेव क्षितिरक्ष from below
६. मि for वि MS
७. श्न for न MS

स्वच्छशीलामिमां मन्ये विप्राणामिव ते तनुम् ।
यस्य नाक्षमया बाणा[1]स्तपन्ति हृदयं द्विषाम् ॥११॥

अर्थादस्माकमेव, कथं कृतम् । किं[fol. 16a]भूतम्—निन्द्यं निन्दार्हम् । किंभूतेन त्वया—सदश्वसमवृत्तिना सन् प्रशस्तश्चासौ अश्वश्चेति सदश्वस्तस्येव वृत्तिर्यस्य । कुलीनाश्वाः पन्थानं त्यक्त्वा न गच्छन्ति, त्वमपि सत्पथं न जहासि इति भावः । यद्वा, सन्तः प्रशस्ता अश्वा यस्य असौ सदश्वः सूर्यः, प्रसिद्धया गृह्यते, तस्येव वृत्तिर्यस्य । सूर्यसदृशेनेत्यर्थः । किंभूतेन—सभ्याचारपरेण, सभ्याः सज्जनास्तेषामाचारो व्यवहारस्तत्र तत्परेण । युधिष्ठिरपक्षे—त्वया अद्य कथमीदृशम्[2] अत्राणं कर्म कृतम् । न विद्यते त्राणं यस्मात्तदत्राणं निन्द्यम्, द्यूतवनवासाज्ञातवासरूपम् । त्वया किंभूतेन—सीदतीति सदः, 'पचाद्यच्' (का० ४।२।४८), सदश्चासौ श्वा[3] चेति सदश्वा, तस्येव वृत्तिवर्तनं यस्य स तथा [तेन] । अस्ति[4] हि कुक्कुरः[5] परैर्दत्तो[6]च्छिष्टाद्यपि[7], स्वशक्त्या भोक्तुं न शक्नोति । पुनः किंभूतेन—भिया सह वर्तते सभीः, तदाचारपरेण ॥ १० ॥

स्वच्छेत्यादि ॥ हे विराट ते तव इमां तनुं विप्राणां ब्राह्मणानामिव मन्ये जानामि । किंविशिष्टाम्—स्वच्छशीलां निर्मलस्वभावाम् । यस्य तव बाणाः शराः अक्षमया क्रोधेन द्विषां शत्रूणां हृदयं न तपन्ति सन्तापयन्ति । युधिष्ठिर[पक्षे]—तव इमां तनुं विप्राणां प्राणशून्या-

१. Missing in A. but marked with a sign, which probably indicates that the scribe meant to supply this omission but forgot about it

२. MS has a redundant ईदृशः after this

३ °श्चासौऽश्वा MS

४ अस्तो MS

५ कुक्क° MS

६ दत्त° MS

७ अच्छिष्टाद्य° MS

हीना क्षतनयस्याज्ञा कथं ते न[1] मनस्तपेत् ।
बुद्ध्वा स्वजनमात्मानमवस्त्रीकृतमुद्धतैः ॥१२॥
कः शङ्कनीयान्[2] मन्येत त्वदीयोऽत्र न तानरीन् ।
हन्याद् वा स्वबले तिष्ठन् भिया मूढे त्वयि स्थिते ॥१३॥

[fol. 16b]मिव मन्ये । किंभूताम्—स्वच्छशीलाम्, स्वम् आत्मानं छ्यतीति स्वच्छं शीलं यस्याः । 'छो छेदने' धातुः (धा० ४ । ३८) । त्वमात्मनश्चरितेनैवात्मानं छिनत्सीति ध्वनिः । यस्य तव हृदयं द्विषां दुर्योधनादीनाम् अक्षमया पाशकस्वरूपा बाणा न तपन्ति ॥११॥

हीनेत्यादि ॥ हे विराट तव आज्ञा[3] क्षतनयस्य हतनीतेः कीचकादेर्मनः कथं न तपेत् । अतएव हीना निन्द्या । आत्मानमुद्धतैः कीचकादिभिरेव स्त्रीकृतं परिभूतं बुद्ध्वा स्वजनमस्मदादिम् अव रक्ष । बलमवलम्ब्य कीचकादीन् दमयेति ध्वनिः । युधिष्ठिरपक्षे—हीनाक्षतनयस्य धृतराष्ट्रपुत्रस्य दुर्योधनस्य आज्ञा तव मनः कथं न तपेत् । किंकृत्वा—स्वजनं मामेव उद्धतैर्दुःशासनादिभिरवस्त्रीकृतं बुद्ध्वा श्रुत्वा । स्थितस्येत्यध्याहार्यम्[4] । किंभूतम्—आत्मानमिव । यद्वा, आत्मानं स्वजनं[5] च अवस्त्रीकृतं बुद्ध्वा । स्त्रियमात्मानं च रक्षितुं न शक्नोषीत्यर्थः ॥ १२ ॥

क इत्यादि ॥ त्वदीयः को जनस्तान् अरीन् कीचकादीन् शङ्कनीयान् भेतव्यान्[6] न मन्येत । त्वयि भिया मूढे स्थिते सति को वा हन्यात् । कः किंभूतः—स्वबले तिष्ठन् अर्थात्तवैव सैन्यं तिष्ठन्, स्वसामर्थ्ये[7] वा । समर्थोऽपि [fol. 17a] कस्तवाज्ञया विना तान् हन्या-

१. न कथञ्च for कथं ते न B   २ °नीयां B
३. स्वाज्ञा corrected into स्वाज्ञा (?) on the margin of the MS
४ °ध्याहर्त्या° MS
५ आत्मानमिव आत्मानं वट्वा आत्मनि स्वजनं MS
६ द्रव्यान् with भ added before it in 1 m
७ स्वसामर्थ्यं MS

धिङ् मामनात्मनस्तेऽहं भार्याभ्रात्रावमानिता[1] ।
अभयं दास्यसीत्युक्त्वा[2] सभायां न मृतास्मि यत् ॥१४॥

दिति ध्वनिः । युधिष्ठिरपक्षे—त्वदीयः क[ः] कनीयान् कनिष्ठो भीमादिः शं कल्याणं मन्येत । अर्थात्तवैव अरीन् दुर्योधनादीन् वा हन्यात् । किंभूतान्—नतान्, त्वत्कनिष्ठेभ्यो हीनान् । किंभूतः कनीयान्—त्वयि तिष्ठन् त्वदधीनः । किंभूते त्वयि—भिया मूढे[3] भयेन मोहिते स्वबले अतिशयाबले स्थिते[4] । प्रयत्नशून्यत्वान्निर्बले । एतेन भीमादिः शत्रुहननक्षमोऽपि तव भ्रातुरवज्ञा[5]भीतेः[6] तवाज्ञया विना शत्रून् न हन्ति, तानाज्ञापयेति ध्वनिः ॥ १३ ॥

धिङ्मामित्यादि ॥ हे विराट मां धिगस्तु । कुतः—यतस्तव भार्यायाः सुदेष्णायाः भ्रात्रा कीचकेन अवमानिता सती सभायां न मृतास्मि । किं कृत्वा—अभयं भयाभावं दास्यसीत्युक्त्वा । तव किंभूतस्य—अनात्मनः कीचकपरतन्त्रस्य भार्यापरतन्त्रस्य वा । एतेन भार्याधीनेन त्वया तस्य दमनं न कर्तव्यमिति ज्ञा[त्वा]पि यन्न मृतास्मि ततो मां धिगस्त्विति भावः । युधिष्ठिरपक्षे—मां धिगस्तु । यतः सभायाम् अर्थाद् दुर्योधनस्य सदसि न मृतास्मि । किंभूता—[ते] तव भार्या पत्नी । पुनः किंभूता—तव भ्रात्रा दुर्योधनेन[7] अभयं भयशून्यं यथा स्यात्तथा दासी असीत्युक्त्वा अवमानिता[8] परिभूता । किं[fol. 17b]भूतस्य तव—अनात्मनः निर्बुद्धेर्निष्प्रयत्नस्य वा । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च' इत्यमरः ( ३।३।१०६ ) ॥ १४ ॥

---

१ °भ्राता° A.
२. °स्य° is missing in A.
३. Added u m
४ स्थि Added u. m
५. ज्ञा added u. m.
६. भीतस्य MS.
७. र्यो corrected l. m.
८. अपमा° MS.

ततः सूतसुताद् दृप्ताद् व्यक्तं न श्रियमाप्स्यसि ।
तथा चेतोऽतिगम्भीरदोषशङ्कि तवाधुना ॥१५॥
परदारेषु निस्त्रिंशं नृवीरमनुजं त्वया ।
भीरुणासूदितं वीक्ष्य यज्जीवामि[1] तद[2]द्भुतम् ॥१६॥

तत इत्यादि ॥ ततस्तस्मात् पूर्वश्लोकोक्ति[3]हेतोः सूतप्रभवात्[4] कीचकात् श्रियं सम्पदं नाप्स्यसि[5] । कीचकस्तव राज्यं नेष्यतीति भावः । व्यक्तं स्फुटमेवैतत् । किंभूतात् तस्मात्—दृप्ताद् बलवतः[6] । तथा चेति निदर्शने । तव चेतश्चित्तमधुना अतिगम्भीरदोषशङ्कि, त्वच्चित्तमतिशयदोषशङ्कायुक्तम् । कृतापराधस्य तस्य मनो निःशङ्कम्, त्वन्तु सशङ्क इति कुतस्तस्मात्तव राज्यरक्षा भविष्यति । युधिष्ठिरपक्षे—ततः सूतसुताद् दृप्ताद् बलवतस्तस्मात् कर्णात् व्यक्तं निश्चितमेव श्रियं नाप्स्यसि । तथा श्रियमिव[7] इतः सकाशादधुना[8] शं कल्याणं नाप्स्यसि । राज्यं च न लप्स्यसे, प्राणरक्षापि न भविष्यतीत्यर्थः । हे कितव अक्षदेविन्[9], हे अतिगम्भीरदोष इति सम्बोधनद्वयम् । 'धूर्तोऽक्षदेवी कितवः' इत्यमरः ( २।१०।४४ ) ॥१५॥

परेत्यादि ॥ हे नृवीर, परदारेषु अन्येषां पत्नीषु निस्त्रिंशं निर्मर्यादं निर्लज्जं वा । यद्वा, निस्त्रिंशं खड्गमिव, हिंसकत्वात् । एवंविधं मनुजं अर्थात् कीचकं त्वया असूदितम् अहतं[10] वीक्ष्य यज्जीवामि

१. यज्जि॰ A
२ द is missing in A
३ ॰शोकोक्ति॰ MS
४. मृतस्वभावात् MS
५. नाप्यापि MS
६. वस or रस for बल MS
७. प्रियमिव MS.
८. इतिः सकशोन्मधुना MS.
९. देविव MS.
१० हद् MS

स्थितस्त्वं पतितो धर्माद्यस्यां[1] भूमौ निराशिषि ।
त्वयार्याचारहीनेन शोच्या[2] पत्याधमेन सा ॥१७॥

तदद्भुतम् [fol. 18a] । अपमानान्मर्तव्ये सति यज्जीवनं तदाश्चर्यमेव । किंभूतेन त्वया—भीरुणा भीतेन । बिभेतीति भीरुः, 'भियो रुग्[3]लुकौ चेति' रुक् ( का० ४।४।५६ ) । पक्षे—हे युधिष्ठिर अनुजं कनिष्ठम् अर्थात् भीमं भीरुणा त्वया सूदितं सूपकारीकृतं दृष्ट्वा यदहं जीवामि तदाश्चर्यम् । सूदं करोतीति सूदयतीति इनन्तात् ( का० ३।२।८ ) । किंभूतमनुजम्—परं शत्रुं दारयतीति[4] कर्मण्यन् ( का० ४।३।१ )। परदारौ इषुनिस्त्रिंशौ बाणखड्गौ यस्य स तथा तम् नृवीरं नरशूरम ॥१६॥

स्थित इत्यादि ॥ हे विराट त्वं यस्यां भूमौ पृथिव्यां स्थितोऽसि सा भूमिः त्वयाध[मे]न हीनेन पत्या शोच्या शोचनीया । किंभूतस्त्वम्—धर्माद् राजधर्माद् पतितश्च्युतः । किंभूतायां भूमौ—निराशिषि आशीर्वादरहितायाम्[5] । धार्मिकायैव राज्ञे प्रजा आशिषं ददति । किंभूतेन त्वया—आर्याचाररहितेन सज्जनव्यवहारशून्येन । पक्षे—हे युधिष्ठिर त्वं धर्मात् पतितः स्वामिनः, अद्य्यादित्वात्[6] तसिः ( का० २।६।२८ ), यस्यां भूमौ अर्थात् मातरि स्थितो जातः, सा आर्या मान्या, अर्थात् श्वश्रूः, त्वयापत्याधमेन निन्दितेन पुत्रेण शोच्या । किंभूतेन—आचा[ र ]हीनेन क्षात्रधर्मरहितेन । चारहीनेन चारशून्येन वा । किंभूतायां [fol. 18b] तस्याम्—

१. धर्मा यस्यां B.
२. शोच्चा A.
३. रुग्ण् MS
४. द° MS.
५. रहिते MS
६. अन्यादि° MS

सज्जनन्यायरहितो जनितस्त्व[1]मनार्यया ।
भीत्या यस्य सभार्यस्य त्राणं प्रत्यक्रिया स्थिता ॥१८॥
विश्व[2]कर्मकृता राज्ञा जीवता बलिनान्यतः ।
त्वया कुपतिना त्यक्ता शरणं कं व्रजाम्यहम् ॥१९॥

निर्गता अपगता आशीः आर्शीर्वादः यस्याः सा तस्याम्[3] । त्वया पुत्रेण कोऽपि कुन्तीं नाशास्ते । अथवा कुन्त्यपि[4] त्वां[5] नाशास्ते ॥१७॥

सज्जनेत्यादि ॥ हे विराट त्वं भीत्या कर्त्र्या सज्जनन्यायरहितो जनितः । भयेन सज्जनाचारं त्यक्तवानसीत्यर्थः । भीत्या किंभूतया— अनार्या निम्नया [तया] । [यस्य] तव सभार्यस्य सभापण्डितस्य त्राणं प्रति अक्रिया स्थिता अकरणमासीत् । भयेन प्रजारक्षणं [न] करोषी-त्यर्थः[6] । युधिष्ठिरपक्षे—त्वं सज्जनन्या पूज्यया[7] मात्रा जनितः । त्वं मात्रैव[8] जनितः, न तु पित्रेति क्लीभवत्वेन निष्पौरुषं सूचितम् । किंभू-तस्त्वम्—अय[9]रहितः शुभावहविधिशून्यः । पुनः किंभूतः—अना चा-पुरुषः । किंभूतया जनन्या—आर्यया मान्यया । सभार्यस्य भार्यासहितस्य तव त्राणं प्रति अक्रिया स्थिता । भार्यामात्मानं च रक्षितुं न शक्नो-षीत्यर्थः ॥१८॥

विश्वेत्यादि ॥ हे विराट त्वया कुपतिना कोः पृथिव्याः स्वामिना त्यक्ता सती अहं कं जनं शरणं व्रजामि गच्छामि । त्वत्तोऽन्यः कोऽ-

---

१ तम॰ A.
२ वैश्य B
३. MS read प्रज्ञशवाम्यां for यस्याः सा तस्याम्.
४. कुन्त्याव MS.
५ द्वा MS.
६ The sentence is repeated, but apparently struck off by enclosing the repetition in brackets in red ink.
७ पूज्या वा MS.
८ मात्रेय MS.
९. अघ॰ MS

येन त्वं दृश्यसे नेता स च क्रोधः स्थितोऽफलः ।
त्वयि संन्यस्ततेजस्के[1] किमरिर्न[2] करिष्यति ॥२०॥

स्मान् रक्षतीति भावः । त्वया किंभूतेन—विश्वकर्मकृता, विश्वेषां सर्वेषामेव पालनरूपं कर्म कुर्वता। पुनः किंभूतेन—राज्ञा [fol. 19a] क्षत्रियेण। अन्यतः कीचकादिसकाशाज्जीवता । बलिना बलवता। स्वयं समर्थः परमाश्रित्य कथं जीवसीति उत्साहनम्। पक्षे—हे युधिष्ठिर त्वया कुत्सितस्वामिना त्यक्ता उज्झिता[3] सती कं जनं शरणं व्रजामि। किंभूतेन त्वया—अराज्ञा अक्षत्रियेण अनृपेण वा । पुनः किंभूतेन—विश्वकर्मकृता, विश्वं समस्तमेव कर्म सेवादिकं कुर्वता, शृगालकुक्कुरादीनां[4] वा[5] । पुनः किंभूतेन—अन्यतः अन्यसकाशाद् बलिना भिक्षया जीवता। एतेन परमाश्रित्य जीवता त्वयानवेक्ष्यमाणा कं जनमेव प्रवेक्ष्यामीति तात्पर्यार्थः ॥१९॥

येनेत्यादि॥ हे विराट येन क्रोधेन त्वं नेता दृश्यसे नायक इति ज्ञायसे अर्थाज् जनैः, स च क्रोधः अफलः अव[6] स्थितः[6] । क्रोधस्य फलमपराद्धानां[7] दमनं त्वं न[8] करोषीति भावः। त्वयि राजनि संन्यस्ततेजस्के सति संक्षिप्तप्रभावे सति अरिः कीचकादिः किं न करिष्यति। अर्थादन्यायं सर्वं करिष्यतीति भावः। पक्षे—हे युधिष्ठिर ये[न] चक्रेण राष्ट्रेण त्वं नेता दृश्यसे राजेति ज्ञायसे, स चक्रः अफलः सन् अधःस्थितः । त्वयि अरिः किं न करिष्यति। किंभूते त्वयि—संन्यस्ततेजस्के सम्यङ् न्यस्तं तेजो येन। चक्रबलयोः फलं [fol. 19b] शत्रुजयः, तदकरणादुभयमेव निष्फलमित्यर्थः ॥२०॥

---

१. ॰स्क A. २ ॰र्न B
३. उजिझता MS
४ गा for शृ MS.
५ 'कुक्कुरादीनार्था MS.
६. अध॰ MS.
७. अपराज्ञानव॰ MS. ८ तनु (for त्वं न) MS.

पातुमुत्सहतां कोपः प्राप्तकालो गुरुस्तव ।
लोकमाश्रित[1]माश्वास्य लोकेऽन्यस्मिन् कृतास्पदः ॥ २१ ॥
दण्डयोग[2]प्रवृत्तेन चक्रेण कृतसंस्थितिम् ।
आश्रिता[3] त्वा यशस्कामं पार्थिवं पात्रमाश्रयम् ॥ २२ ॥

पातुमित्यादि ॥ हे विराट तव कोपः क्रोधः पातुं रक्षितुमुत्सहताम् उत्साहं करोतु । कोपमवलम्ब्य कीचकं हत्वास्मान् रक्षेति भावः । किंभूतः—प्राप्तकालः, प्राप्तः कालः समयो येन । गुरुर्महान् । किं कृत्वा—आश्रितं लोकमस्मदादि[4]माश्वास्य सान्त्वयित्वा । पुनः किंभूतः—अन्यस्मिन् आश्रितादितरस्मिन् लोके कृतास्पदः, कृतमास्पदं स्थानं येन स तथा । पक्षे—हे युधिष्ठिर [तव] को गुरुः पितृपितामहादिः अपो जलानि पातुमुत्सहताम्[5] । ईदृक् निन्द्येन त्वया दत्तं तर्पणजलं न पास्यन्तीति भावः । किंभूतो गुरुः—प्राप्तकालः, प्राप्तः कालो मृत्युर्येन स तथा । पुनः किंभूतः—अन्यस्मिन् लोके कृतास्पदः लब्धप्रतिष्ठः । किं कृत्वा—आश्रितं लोकं सेवकादिमाश्वास्य पालयित्वा ॥ २१ ॥

दण्डेत्यादि ॥ हे विराट [त्वा] त्वां पार्थिवं राजानमाश्रयमहमाश्रिता । किंभूतम्—पात्रं योग्यम । पुनः किंभूतम्—चक्रेण कृतसंस्थितिमेव पाठः, स्थितिशब्दस्यैव मर्यादावाचित्वात् । चक्रेण किंभूतेन—दण्डयोगप्रवृत्तेन, दण्डस्य योगात् प्रवृत्तं चरित्रं यस्य स तथा तेन । पुनः किंभूतम्—यशस्कामं कीर्त्यभिलाषकम्[6] । पक्षे—हे [fol. 20a] अयशस्क यशोरहित[7] [त्वा] त्वाम् आमं पार्थिवं पात्रमदग्धमृद्भाजनमहमाश्रिता[8] । किंभूतम्—

१. त missing in A
२. °योगात् B, योगा A
३. ता missing in A
४. °स्मदाङ्ग° MS
५. पातुअ° MS
६. कीर्त्यभित्याश° MS
७. °हितं for °रहितं MS
८. °जनं सहमा आश्रिता MS.

क्षमा यस्य शराः पातुं न देशं स्वेन तेजसा[१] ।
अलब्धक्षितिपार्थस्य परतस्तस्य जीवितम् ॥२३॥

She then directs her punning speech, simultaneously to Virāṭa and Arjuna,

धृता तनुरियं मन्दा किन्न्या[२]येन शुचीकृता ।
त्वादृग् वृष्णिवृषप्रख्यः ससभ्यः स्यात्कथं मृदुः[३] ॥२४॥

चक्रेण कुम्भकारस्य घटघटनद्रव्यविशेषेण जनितं संस्थानं [यस्य तम्] । किंभूतेन—दण्डयोगाल्लगुडयोगात् प्रवृत्तेन भ्रामितेनेति यावत् ॥२२॥

युधिष्ठिरमुक्त्वा इदानीमर्जुनमाह । भीमेनैव प्रत्युत्तरं दातव्यमिति पश्चादेव तन्निर्देशः । क्षमेत्यादि ॥ हे विराट, यस्य राज्ञः शरा बाणाः स्वेन तेजसा स्वकीयेन तेजसा देशं जनपदं पातुं रक्षितुं न क्षमा न शक्ताः, तस्य परतो जीवितम्[४] । अन्यमाश्रित्यैव स राज्यं करोतीत्यर्थः । किंभूतस्य—अलब्धक्षितिपार्थस्य, अलब्धो न प्राप्तः क्षितिपशब्दस्यार्थो येन स तथा । पक्षे—हे अर्जुन, तस्य पार्थस्य पृथायाः सुतस्य परतो जीवितम् । तस्य कस्य—यस्य शरा बाणाः स्वेन तेजसा नदानामीशं[५] समुद्रं पातुं [शोषयितुम्] 'पै ओवै शोषणे'[६] (धा० १ । ९६८—९६९), क्षमाः । जीवितं किंभूतम्—अलब्धक्षिति, अलब्धा न प्राप्ता क्षितिः पृथ्वी येन तत् तथा । अप्राप्त[७]निजभूमिः परमाश्रित्य जीवसीति[८] धिक्कारः ॥ २३ ॥

धृतेत्यादि ॥ [९]हे विराट, न्यायेन शुचीकृता इयं तनु[fol. 20b]रिदानीं मन्दापट्वः, कार्याक्षमेति यावत्, ईदृशी किं धृता । वृष्णीनां

१. A has स्वेहतेजसा for स्वेन तेजसा omitting न देशं
२. किन्त्या A and B ३. The *visarga* is omitted in A
४. MS wrongly repeats here तस्य कस्य—यस्य शरा बाणाः from below and encloses it with brackets in red ink, which is equivalent to erasing.
५. सदनामीशं
६. शोषे MS.
७. अप्राप्ता MS.
८. जीवमीति MS.
९. MS repeats wrongly here हे वृष्णि हे वृषप्रेक्ष(?) वृष्णीनां यदूनां वृषः श्रेष्ठः from below.

त्वदन्यो निरनुक्रोशः को नारीषु भयाद्भवेत् । to Nakula.
भयेन कुलधर्मस्ते पङ्के गौरिव सीदति ॥२५॥
राजा यमोऽसि दण्डेन कथं गोपाय्यते त्वया । to Sahadeva.
दण्डः क्षेमङ्करो[1] राज्ञां धर्मादुग्रस्त्र दारुणः ॥२६॥

यदूनां वृषः श्रेष्ठो वासुदेवस्तत्प्रख्यः[2] तत्समः त्वादृक् पुरुषः कथं मृदुः स्यात् । श्रीकृष्णसदृशस्य भवतो मृदुत्वमयुक्तमिति भावः । किंभूतस्त्वादृक्—ससभ्यः सभ्यैः सहितः । एतेन तव सभासदोऽपि मृदव इति सूचितम् । पक्षे—हे अर्जुन येन त्वया मन्दाकिन्या स्वर्गङ्गया शुची[3]कृ[ता] इयं तनुर्धृता, स त्वादृक् सभ्यः पुरुषः कथं वृष्णिवृषप्रख्यो मृदुः स्यात् मेषवृषवत्कार्याक्षमो भवे[दि]ति । मन्दाकिन्या उल्लेखेनास्य इन्द्रादस्त्रशिक्षा ध्वनिता । 'मेषवृष्णय एडके'[4] इत्यमरः ( २ । ९ । ७६) ॥ २४ ॥

अर्जुनमुक्त्वा नकुलमाह—त्वदन्येत्यादि ॥ हे विराट त्वत् भवतो[5]ऽन्यः को जनः भयात् कीचकादिजनिताद्धेतोः नारीषु स्त्रीविषये निरनुक्रोशो निर्दयो भवेत् । भयेन स्त्रियं मां न रक्षसीत्यर्थः । ते तव कुलधर्मः भयेन पङ्के सीदति पापे निपत्यावसन्नो भवति । गौरिव गौर्यथा पङ्के कर्दमेऽवसीदति । पक्षे—हे नकुल ते तव धर्मः क्षत्रियव्यवहारो भयेऽवसीदति पङ्के गौरिव । त्वदन्यः को ना कः पुरुषः अरीषुभयात् अरेर्दुर्योधनादेरिषुभ्यो बाणेभ्यो भयात् नि[fol. 21a]रनुक्रोशो[6] न भवेत् । 'क्रुश आह्वाने' धातुः (धा० १ । ९०९) । विपक्षाह्वानरहित इत्यर्थः[7] (?) ॥ २५ ॥

सहदेवमाह—राजेत्यादि । हे विराट त्वं राजा नृपतिर्दण्डेन

---

१. °क्षेमकरो B.
२. प्रेक्ष्यः MS.
३. शृती° MS
४. एडका MS
५. भवत्ततो MS
६. निरनुद्धोषो MS
७. विपक्षाज्ञानरहितेत्यर्थः MS.

रक्षोपायेषु निपुणः स्थितासु व्यसनोदये । and lastly, to Bhīma.
मद्विधामूपकारित्वं त्वादृङ् नाद्य कथं भजेत् ॥२७॥
पाता शूरोऽसृजस्तस्य मदङ्गजविमर्दिनः ।
सिंहस्येव मृगः क्षुद्रस्त्वं किल स्वयमीदृशः ॥२८॥

यमोऽसि अन्तकसदृशोऽसि । त्वया कथं स दण्डो गोपाय्यते निह्नूयते । यद्वा त्वयैव कथं[1] गोपाय्यते आत्मा न प्रकाश्यते, भावे आत्मनेपदम् । किंभूतो दण्डः—धर्मादुद्यन्[2] उद्यतो भवन् राज्ञां क्षेमङ्करः, न दारुणः भयङ्करः[3] प्रजाविरागहेतुः । पक्षे—हे सहदेव यमो यमजस्त्वं[4] राजा क्षत्रियोऽसि । कथं दण्डेन लगुडेन करणभूतेन त्वया गोपाय्यते गोपेन इवाचर्यते । राज्ञां क्षत्रियाणां धर्मादुद्यन् दण्डो दमः क्षेमङ्करः, न दारुणः काष्ठस्य । 'राजा मृगाङ्के क्षत्रियेऽपि च'[5] इत्यमरः (३ । ३ । १११) ॥ २६ ॥

इदानीं भीममाह—रक्षेत्यादि ॥ हे विराट मद्विधासु व्यसनोदये विपदुत्पत्तौ स्थितासु विषये त्वादृग् भवद्विधो जनः कथमद्य उपकारित्वं न भजेत् । किंभूतस्त्वादृक्—रक्षाया रक्षणस्योपायेषु रक्षायामुपायेषु सामादिषु च वा निपुणः कुशलः । पक्षे—हे भीम मद्विधा अहम् असुव्यसनोदये प्राणवि[यो]गदुर्गमे स्थिता अद्य रक्षोऽपायेषु रक्षसामपायेषु[6] मारणेषु निपुणः त्वा[fol. 21b]दृक् ना[7] पुरुषः कथं सूपकारित्वं पाचकत्वं भजेत् । पत्नीपरिभवे विक्रम एव युज्यते, तथापि कथं भवान् परस्य[8] पाचको भवतीत्युत्तेजनम् ॥ २७ ॥

पातेत्यादि ॥ हे विराट त्वं पाता रक्षकः शूरो वीरः, ईदृशः सन् किल निश्चितं स्वयं तस्य कीचकस्य मदं गर्वम् असृजः सृष्टवानसि ।

---

१. MS. adds a redundant निह्नु here
२. °दुद्यतन MS
३. भ added in u m.
४. यमनुस्थ MS
५. Amarakośa reads क्षत्रिये नृपे.
६. Added in l m
७. सा or मा MS.
८. परत्वा MS

मदं वरद शान्तोऽपि दध्यादशिवमीरितः ।
दुरिन्द्रियै रजस्वांस्तु हृत[1] एव त्वयीदृशे ॥ २९ ॥

उपमानमाह—गजविमर्दिनः सिंहस्य क्षुद्रो मृगो हरिणादिरिव। सिंहो यथा गजं हत्वा क्षुद्रं मृगं न गणयति, तथा कीचकोऽपि जितकाशितया भवन्तं न गणयतीत्यर्थः । पक्षे—हे भीम त्वं स्वयम् ईदृशोऽनुयुक्तः[2] सन् किल निश्चितं तस्य औचित्याद् दुःशासनस्य उरोऽसृजः हृदयरक्तस्य [आशु] पाता, तस्य हृदयरक्तं पास्यसि[3] । किलेत्युपहासपदम् । उरोऽसृज इति 'कर्तृकर्मणोः कृति नित्यम्' (का० २ । ४ । ४१) इति षष्ठी । तस्य किंभूतस्य—मदङ्गज[4]विमर्दिनः मदङ्गजानां केशानां विमर्दनशीलस्य । केशेषु धृत्वा दुःशासनस्तां सभायामानीतवानिति पुराणकथा । यद्वा, मद्विषये अ[ङ्ग]जेन कामेन[5] करणेन विमर्दिनः प्रध्वंसकस्य। उपमानमाह—सिंहस्य हृदयरक्तं क्षुद्रो मृग इव । यथा क्षुद्रमृगेण सिंहस्य हृदयरक्तपा[fol. 22a]-नमसम्भाव्यं तथेद[म]पीत्यर्थः ॥ २८ ॥

मदमित्यादि ॥ हे विराट व[र]द अभयादिदानसमर्थ[6] [शान्तोऽपि जनः] दुरिन्द्रियैः निन्दितैरिन्द्रियैरीरितः प्रेरितः सन् अशिवम् अकल्याणकरं मदं दध्यात् । त्वयि ईदृशे दण्डपराङ्मुखे सति रजस्वान् रागी जनः पुनः हृत एव, इन्द्रियैरात्मसात्कृत एव । पक्षे—हे भीम मदम्बरदशान्तो मद्वस्त्रानामन्तोऽञ्चलो रजस्वान् ऋतु-कालीनशोणितयुक्तः दुष्टमिन्द्रियं येषामीदृशैर्दुःशासनादिभिः [ई]रितः प्रेरितमात्रोऽपि अशिवमकल्याणं दध्यात् । कुत्र—[त्वयि] ईदृशे

१. कृत B
२. °नुमुक्तः MS.
३. हृदयं दास्यसि MS
४. मतङ्गज° MS.
५. कात्यन MS
६. °दानरूपसमर्थः MS

कुर्वन्तं द्विषतां हर्षमात्मानं नयनिन्दितम् ।
बुद्ध्वा को नानुतप्येत कुरुष्व[1] स्थिरमास्पदम् ॥३०॥
अपराद्धेष्वहङ्कारादसुहृत्त्वं भवादृशः ।
पुत्रेष्वपि हितं कस्माद् द्विषत्सु न विजृम्भसे[2] ॥३१॥

उद्योगशून्ये सति । पुनर्हृतः अपनीत एव, अहं नग्ना कृता एवेत्यर्थः । रजस्वलाया द्रौपद्याः सभायां दुःशासनादिभिर्वस्त्राकर्षणह[र]णं कर्तुमारब्धम्, अनन्तव्रतस्य[3] प्रभावात् तद्वस्त्रमपर्यन्तं जातमिति पुराणकथा । 'रजो गुणे च स्त्रीपुष्पे' इत्यमरः (३ । ३ । २३०) ॥२९॥

कुर्वन्तमित्यादि ॥ हे विराट द्विषतां हर्षं कुर्वन्तम् अतएव [नय]-निन्दितमेवंभूतम् आत्मानं बुद्ध्वा को जनो न अनुतप्येत अनुतप्तो भवेत् । कर्मकर्तर्यात्मनेपदम् (का० ३ । २ । ४१) । तेन आस्पदं स्थानं राज्यमिति यावत् स्थिरं कुरु[ष्व] । पक्षे—हे भीम द्विषतां शत्रूणाम् अन्तं नाशं कुरु । परसेवादिना निन्दितमात्मानं हर्षं नय । कुरुषु कुरु-वंशोद्भवेषु आस्पदं प्रतिष्ठां राज्यं[4] अस्थिरं बुद्ध्वा को जनो नानुतप्येत, अपि तु सर्व एव जनो युष्माकं कुरुवंशजानां[5] विपदं श्रुत्वानुतप्तो भवतीत्यर्थः । 'प्रतिष्ठा कृत्यमास्पदम्' इत्यमरः (३ । ३ । ९३) ॥३०॥

अपेत्यादि ॥ हे विराट अहङ्काराद्धेतोः अपराद्धेषु[6] पुत्रेष्वपि भवादृशः असुहृत्त्वं प्राणहारकत्वं हितं हितकर[म्] । पुत्रस्तावदास्तां द्विषत्स्वपराद्धेषु [कीचकादिषु] कथं न विजृम्भसे प्रगल्भो न भवसि । पक्षे—हे भीम राज्यहरणादिना अपराद्धेषु अदृशः अन्धस्य धृतराष्ट्रस्य पुत्रेषु दुर्योधनादिष्वेव अहङ्कारात् निजदर्पादेव त्वं असुहृत्

१. कुरुषु B
२. विजृम्भते B
३. अनन्तवतस्याः MS.
४ राद्यं MS
५. कुर्धंनजानां MS
६. अपरत्वेषु MS

अव कन्दर्पसम्भूत्या सुस्थं[1] कृतवतो जनम् ।
जगत्त्रस्तं क्षमः कर्तुं सुस्थमेष भुजस्तव ॥ ३२ ॥
क्षमापराधे यस्यासौ शङ्कते व्यक्तमापदम् ।
नृपतिः क्षतरक्षः सन् मास्म भूस्त्वमपीदृशः ॥ ३३ ॥

प्राणहरः शत्रुर्वा भव । कस्मादपिहितम् अनावृतं यथा स्यात्तथा न विजृम्भसे, अज्ञातः सन् तिष्ठसि ॥ ३१ ॥

अवेत्यादि ॥ हे विराट, कन्दर्पसम्भूत्या कामाविर्भावेन[2] जनम् असुस्थं कृतवतः कीचकाद् अव रक्ष । एष[3] तव भुजस्त्रस्तं जगत् सुस्थं कर्तुं क्षमः । पक्षे—हे भीम असुस्थं स्वास्थ्यरहितं जनं जनस्थानं दर्पसम्भूत्या दर्पातिरेकेण अवकं वकराक्षसरहितं (fol. 23a) कृतवतस्तव एष भुजः सुस्थं जगत् त्रस्तं कर्तुं क्षमः शक्तः । विक्रान्तादस्माद् भवद्भुजाद् भुवनमेव बिभेति[4], कीचकः पुनर्न बिभेति इत्युत्तेजनम् । जनस्थाननाम्नि वनभागे [भी]मो वकराक्षसं हतवान् ॥ ३२ ॥

क्षमेत्यादि ॥ हे विराट, यस्य अपराधे क्षमा योऽपराधं क्षमते असौ नृपतिः व्यक्तं स्फुटमेव आपदं शङ्कते[5] । अपराधिनैव[6] ममापत्कर्तव्येति बिभेति । त्वमपि क्षतरक्षः सन्, क्षता रक्षा प्रजारक्षणं येन एवंभू[तः] सन् । ईदृशोऽपराधाद् विपच्छङ्की मास्म भूः । पक्षे—हे भीम क्षमाप, क्षमां शान्तिं पाति रक्षतीति क्षमापः, विक्रमं त्यक्त्वा क्षमामेव बिभर्षीति सोल्लुण्ठ[7]सम्बोधनम् । असौ नृपतिः युधिष्ठिरः

---

१. सुस्त्वं A.

२. This word is indistinctly written : may be कामातिभरेण or कामाभिभवेन ।

३. एय MS.

४. बिम्यति MS

५. शङ्कचेत् MS.

६. °राधिनेव MS.  ७. सोल्लुस्च ? MS.

इति संविग्नमनसा स कलत्रेण चोदितः ।
जगाद लक्ष्म्या शौर्येण सकलत्रेण चोदितः ॥३४॥
दुःख[1]वृत्तेर्जनस्यास्य शमस्त्वय्यबले कुतः[2] ।
यो भयस्योदयं वेत्ति कृष्णेन सदृशस्य ते ॥३५॥

Bhīma replies in a similar punning speech, addressing Virāṭa and Draupadī simultaneously,

राधेयस्य कर्णस्य आपदं शङ्कते, राधेयेन ममापत् कर्तव्येति शङ्कां करोति । हे चतरक्ष:, चतं रक्षो रा[ क्ष ]सो येन ईदृशः, सम्बोधनम्[3] । त्वमपि ईदृशो राधेयाद् विपच्छङ्की मास्म भूः ॥३३॥

इतीत्यादि ॥ स भीमो जगाद । किंभूतः—संविग्नमनसा उद्विग्नहृदयेन कलत्रेण भार्यया द्रौपद्या इत्यनेन प्रकारेण चोदितः प्रेरितः । तथा (fol 23b) लक्ष्म्या शोभया शौर्येण च उदितः । किंभूतेन शौर्येण—सकलत्रेण, सकलं समस्तं त्रायत इति सकलत्रः ईदृशेन ॥३४॥

राजानं द्रौपदीं च श्लेषोक्त्या वदति—दुःखेति[4] । हे विराट, त्वयि अबले सामर्थ्यशून्ये सति अस्य स्त्रीजनस्य दुःखवृत्तेः कुतः शमः शान्तिः । अस्मिन् (?) स्त्रीजनदुःखस्य वृत्तिः शान्ता न भविष्यतीत्यर्थः । योऽयं कृष्णेन श्रीनारायणेन सदृशस्य ते तव भयस्य उदयमुद्भवं वेत्ति । अस्तु तावद्भवता भयापनयनम्, भवानेव बिभेतीति कुतो दुःखवृत्तिशान्तिः । पक्षे—अयि अबले योषे कृष्णे द्रौपदि दुःखवृत्तेः अस्य मद्विधस्य जनस्य कुतः शं कल्याणं सुखं वा अस्तु । योऽयं न-सदृशस्य अयोग्यस्य ते तव भयस्योदयं वेत्ति । तव भयोदयं जानन् यावद्भयापनयनं न करोमि तावन्मम कुतः सुखमित्यर्थः ॥३५॥

---

१. दुष्कृख A.
२. °स्त्वय्यबलिङ्गितः B
३. सनसाधो MS
४. दुःखेनत MS

अश्रुतां ते क्षणेनाहं श्रुतवानीदृशीं दशाम् ।
विद्धि तस्य मदारम्भाद् घोरमस्वन्तमागतम् ॥३६॥
स्वबले न कथं मत्तः प्राप्य[1] मोहं सुदारुणम् ।
दोषा[2]रम्भे पतेदद्य त्वामतिक्रम्य कीचकः ॥३७॥

expressing his resolution to kill Kīcaka in the evening.

अश्रुतामित्यादि ॥ हे विराट क्षणेन ते तव ईदृशीम् अश्रुताम् अश्रुतपूर्वां दशामवस्थाम् अहं श्रुतवान् । अतस्तस्य कीचकस्य मदा-रम्भाद्[3] घोरं[4] दारुणम् अस्वन्तम् आगतं विद्धि जानीहि । शोभन-श्चासौ अन्तः परिणतिश्चेति स्वन्तः, न स्वन्तः अस्वन्तः । तस्य गर्वा-टोपेन अ[fol. 24a]शोभना परिणतिर्जातप्रायेत्यवधार्यतामित्यर्थः । पक्षे—हे अश्रुतान्तेक्षणे क्रन्दनजलावृतनेत्रे द्रौपदि तव ईदृशीं दशां नाहं श्रुतवान् । इदानीं श्रुतौ सत्यां कीचकस्य मदारम्भात् [मद्]-विक्रमकार्यारम्भेण घोरं भीषणम् अस्वन्तं प्राणान्तम् आगतं विद्धि ॥३६॥

स्वेत्यादि ॥ हे विराट की[च]कस्त्वामतिक्रम्य अवमन्य कथं दोषारम्भे न पतेत्, दोषे कथं न पतति । इदानीमपि स दुष्ट इति भवता न गण्यते । किंभूतः कीचकः—स्वबले निजसामर्थ्ये मत्तः अहङ्कृतः । किं कृत्वा—सुदारुणं मोहं मूढतां प्राप्य । अन्योऽपि मद्यादिमत्तो मोहं प्राप्नोति । पक्षे—शोभना चासौ अबला चेति

---

१. प्राप्य B
२. देषा° A
३. मदारस्तात् MS
४. येरं MS.

व्यक्तं क्षत्रियवीर्येण सुप्तमुत्सवकारिणा ।
हन्यते सूतपुत्रोऽद्य न यतः कृतकिल्विषः ॥३८॥
कथं सद्धर्ममर्यादाभेदे विनयमक्षयम् ।
याति तस्योद्धृतोत्सेका[1] चेतना कामचारिणः ॥३९॥

सम्बोधने हे स्वबले[2] द्रौपदि, अद्य कीचकस्त्वामतिक्रम्य मत्तो[3] मत्सकाशात् सुदारुणं मोहं मूर्च्छां प्राप्य दोषायाः रात्रेरारम्भे रात्रौ [इति यावत्] कथं न पतेत्, अपि तु मूर्च्छितः सन् रात्रौ पतिष्यत्येव ॥३७॥

व्यक्तमित्यादि । हे विराट, व्यक्तम् उत्प्रेक्षायाम्[4], उत्सवकारिणा क्षत्रियवीर्येण क्षत्रियाणां बलेन प्रभावेण[5] वा अद्य सुप्तम् । कुतः—यतः कृतकिल्विषः कृतपापः सूतपुत्रः कीचको न हन्यते । क्षत्रियवीर्ये जाग्रति हि कृ[fol. 24b]तपापो न जीवति । पक्षे—हे द्रौपदि कृतकिल्विषो विहितापराधः तथा सुप्तमुत् सुप्तहर्षः स सूतपुत्रः[6] कीचको व्यक्तं स्फुटमेव वक्कारिणा भीमेन नयतो न्यायादेव हन्यते । अपराधकारिणो वधो न्याय्य एव । 'अपराधेऽपि किल्बिषम्[7]' इत्यमरः (३।३।२२२) ॥३८॥

कथमित्यादि ॥ हे विराट सद्धर्ममर्यादाभेदे कामचारिणः स्वेच्छया धर्ममर्यादाभेदकस्य तस्य कीचकस्य उद्धृतोत्सेका उद्धतेति यावत् एवंभूता चेतना कथम् अक्षयं [विनयं] याति प्राप्नोति । नास्ति क्षयो यस्मादसावक्षयः । स्वतन्त्रस्य प्रभुदमनं विना कुतो विनय इति

१. तस्य धृतो A.
२. वेले only, MS
३. मुक्तो MS.
४. उत्प्रेक्षते MS.
५. न correct to ण 1 m
६. मृ for सू MS.
७. किल्विष MS.

अत्रपां चाल्यमानेन हृदयेन भिया भृशम् ।
रतामक्षत्रया वृत्त्या भर्तुर्निन्दामि ते तनुम् ॥४०॥

इति वदति वृकोदरे विवस्वान्
सदृशवपुर्निकरेण विद्रुमाणाम् ।

Approach of evening

भावः । पक्षे—हे सद्धर्ममर्यादाभे उत्कृष्ट[1]धर्ममर्यादासदृशि[2] देवि राजमहिषि द्रौपदि कामचारिणः कामुकस्य तस्य कीचकस्य उद्भूतोत्सेका उन्मीलितौद्धत्या चेतना कथं यमक्षयं यमनिवासनं न याति, अपि तु यास्यत्येव । वर्त्तमानसामीप्ये वर्त्तमाना (का० ३।१।११), यथा 'कदा गमिष्यति, एष[3] गच्छामि' इति । सद्धर्ममर्यादाभेदे सति हे अवि कान्तिशून्ये इति कश्चित् ॥३९॥

अत्रेति ॥ हे विराट भर्तुः पोषणकर्तुस्ते तव अक्षत्रया क्षत्रियेतरया वृत्त्या र[fol. 25a][4]तां तथा भिया भयेन भृशमत्यर्थं चाल्यमानेन हृदयेन हेतुना अत्रपां लज्जारहितां तनुं निन्दामि । नतामित्यपि पाठः, तदा नम्राम्[5] । पक्षे—हे पाञ्चालि द्रौपदि अत्र विषये ते तव भर्तुः स्वामिनो युधिष्ठिरस्य भिया अमानेन मानशून्येन हृदयेन हेतुना अक्षत्रया अक्षैः पाशकैस्त्रायत इति अक्षत्रा, ईदृश्या वृत्त्या[6] रतां तनुं निन्दामि ॥४०॥

सर्वं संस्तुत्य छन्दो[7]भेदेन सर्गान्तं[8] बोधयन्नाह—इतीत्यादि ॥ वृकोदरे भीमे इति वदति सति विवस्वान् सूर्यस्त्वरितमस्तमगमत् ।

---

१ उक्ृ॰ MS

२ अदृशि MS.

३ एव MS

४. The pages in the I O MS. are wrongly bound here : olio 26 comes before fol 25.

५. नम्रः MS.

६. वृत्ता MS.

७. वृन्दो MS

८. सङ्गा॰ MS

त्वरितमगमदस्तमादधानः
खगनिलयै[1]र्घनतां भुवि द्रुमाणाम् ॥४१॥
विकचसरसिजा यथा नलिन्यः
सह रविना विनिमीलिता नलिन्यः।
प्रियमकृत[2] सहृत्कुमुद्वतीनां[3]
युवतिधियां रमणेषु मुद्वतीनाम्[4] ॥४२॥

किंभूतः—विद्रुमाणां प्रवालानां निकरेण समूहेन सदृशवपुः, लोहितशरीर इत्यर्थः। तथा खगानां पक्षिणां निलयैर्निलयनैः भुवि पृथिव्यां द्रुमाणां वृक्षाणां घनतां निरन्तरतां मेघतां वा[5] आदधानः अर्प[य]न्। आसन्नेऽपि[6] घने खगस्य सूर्यस्य निलयनं भवत्येव। विद्रुमतुल्यशरीरतया सूर्यस्यापि भीमवचनाद् रुषेव रक्तत्वं जातमिति ध्वनितम्। दोषारम्भे कीचकः पतिष्यतीति रात्रौ कीचकवधं वाञ्छतः[7] क्रुद्धस्य भीमस्यानुरोधादिव सूर्योऽपि तत्कालमेवास्तमगा[fol. 25b]दिति कीचकविनाशे देवा[8]नामप्या[नु]कूल्यं[9] सूचितम्। पुष्पिताग्राच्छन्दः ॥४१॥

विकचेत्यादि॥ यथा नलिन्यः पद्मिन्यो रविना सह विनिमीलिताः, तथा कुमुद्वतीनां सुहृच्चन्द्रो युवतिधियां स्त्रीबुद्धीनां प्रियम् अकृत कृतवान्। यौगपद्यबोधको यथा-शब्दः, यदैव नलिन्यो विनिमीलितास्तदैव चन्द्रः समुदित इत्यर्थः। नलिन्यः किंभूताः—विकच-

१. °निर्ये A; निचये° B.
२. अहृत A.
३. कुसुमद्वतीनां A
४. This line is omitted in A
५. मेघतान्वा MS.
६. अन्यस्मिन्नपि MS
७. तिः corrects to तः 1.m
८. देवादेवा MS.
९. क्रू for कू MS.

Kīcaka allured to meet Draupadī

शशिनि वितिमिरेऽनुचिन्त्य कृष्णां
मतिरशिवे निपपात कीचकस्य ।
न वचनमशृणोन्नृपापमानी[1]
तदकरणं प्रति पातकी च कस्य ॥४३॥
अथ समदगजेन्द्रकान्तयातं
पवनसुतः प्रविलोभ्य[2] कान्तया तम् ।

सरसिजाः, विकचानि विकसितानि सरसिजानि यासु ईदृश्यः । तथा अनलिन्यः, नास्ति अलि[3]: भ्रमरो यासु ईदृश्यः । युवतिधियां किंभूतानाम्—रमणेषु स्वामिषु क्रीडासु वा मुदुतीनां हर्षयुक्तानाम् ॥४२॥

शशिनीत्यादि ॥ वितिमिरे विसृतं[4] तिमिरं यस्मादीदृशे शशिनि चन्द्रे सति कीचकस्य [मतिः] मनः कृष्णामनुचिन्त्य अशिवे अकल्याणकरे कर्मणि निपपात । नृपापमानी रा[जा]पमननशीलः पातकी स कीचकस्तदकरणं द्रौपदीविध्वंसरूपस्य कर्मणोऽकरणं प्रति कस्य च[5] कस्यापि वचनं न अशृणोत् ॥४३॥

अथेत्यादि ॥ अथानन्तरं पवनसुतो भीमः कान्तया[6] द्रौपद्या समदगजेन्द्रकान्तयातं समदस्य गजे[fol. 26a]न्द्रस्येव कान्तं कमनीयं यातं गमनं [यस्य] स ईदृशं तं कीचकं प्रविलोभ्य प्रलोभ्य[7] अरिं तमेव कीचकं पतितुं प्राप्तुं, अन्तर्भूतकारिता-

१. °नृपमानी B ; नृपावमानी A.
२. परिलोभ्य A ; प्रविलोक्य B
३. अली MS
४. विसतं MS.
५. कस्य च in repeated in MS
६. कान्ताया MS
७. प्रलोभयित्वा MS

कृतकग्रहमितोऽबलायमानः
पतितुमरिं तरसा बलायमानः ॥४४॥
मदयितुमिव[१] कीचकं स्मरार्तं
रुरुदु[२]रपां पुलिनेषु चक्रवाक्यः ।
तमसि शयितमस्पृशत्स भीमं
द्रुपदसुतेत्यकृतस्वचक्रवाक्यः ॥४५॥

meets instead Bhīma in the disguise of a woman.

शैत्वात् पातयितुं वा, तरसा वेगेन कृतकगृहं सङ्केतगृहम् इतः गतः । किंभूतः—बलायमानः बलभद्रसदृशः[३], बल-शब्दात् 'कर्तुराधिः सलोपश्च' इत्यायिप्रत्ययः (का० ३।२।८) । तथा अबलायमानः, अबला इवाचरतीति पूर्ववदायिः । द्रौपदी भीमवचनात् कीचकं सम्भोगदाने आश्वास्य[४] विराटस्य नर्तनागारं सङ्केतस्थानमकरोत् । अनन्तरं रात्रौ भीम एव कीचकवधवाञ्छया तत्र जगामेति पुराणकथा[५] ॥४४॥

मदयितुमित्यादि । चक्रवाक्यः अपां पुलिनेषु तोयेत्थित[६]द्वीपेषु रुरुदुः । पुलिन-शब्देनैव जलसम्बन्धावगमात्[७] शाब्दमेव (!) शैत्यं बोधयितुमपामिति प्रयुक्तम् । अत्रैवोत्प्रेक्षामाह—स्मरार्तं कीचकं मदयितुमिव । यत्र समये तिर्यञ्चोऽपि विरहसहनासमर्थास्तत्र मदोद्धतस्य का कथा इति ध्वनिः । स कीचकः अकृतस्वचक्रवाक्यः[८], अकृतमगृहीतं स्वचक्रस्य निजवर्गस्य वाक्यं येन ईदृशः सन् तमसि अन्धकारे[९] शयितं भीमं द्रुपदसुतेति कृ[fol. 26b]त्वा अस्पृशत् ॥४५॥

---

१. शमयितु॰ B
२. रुरु A (दु missing)
३ स is added u m
४. दानेना॰ MS.
५. कथाः MS.
६. ॰तोयोल्वित MS
७ ॰वगमत MS
८. ॰आधाश्च for वाक्यः MS
९ ताद्धकारे MS.

Slaying of Kīcaka

अथ पथिषु धृतो रथेन कृच्छ्रात्
पृथुतनुगौरवसन्नतारकेण ।
द्रुतमकृत[1] भुजद्वयेन भीमः
कदनमरेरवसन्नतारकेण ॥४६॥
च्युततिमिरमवाप्य[2] तन्निशान्तं
कथमपि दारुणमात्महानिशान्तम् ।
गिरिशिखरमिव प्रभञ्जनास्तं
ददृशुरचेतनमप्रभं जनास्तम् ॥४७॥

अथेत्यादि ॥ अथानन्तरं भीमो भुजद्वयेन अरेः कीचकस्य कदनं विनाशं द्रुतमकृत । किंभूतः—पथिषु वर्त्मसु पृथुतरगौरवसन्नतारकेण, अरं चक्रप्रान्तः तद्योगादरं[3] चक्रं तस्य समूह आरम्, पृथुतरं यद्गौरवं[4] तेन सन्नतं आरं यस्य स पृथुतरगौरवसन्नतारः, तस्मात् 'शेषाद्वेति' कप्रत्ययः (का० २.५।६ वृ०), ईदृशेन रथेन कृच्छ्राद्धृतः । किंभूतेन[5] भुजद्वयेन—अवसन्नतारकेण, तारयतीति तारकः, अवसन्नस्तारको यस्मादीदृशेन । तस्य भुजद्वयात्तारको नास्तीत्यर्थः ॥४६॥

च्युतेत्यादि ॥ च्युततिमिरं ध्वस्तान्धकारं तन्निशान्तं प्रभातं गृहं वा अ[वा]प्य जनः कथमपि कष्टसृष्ट्या आत्मनो हानिशान्तं दारुणम् अन्तःप्रवेशितहस्तपादादित्वाद् भीषणं अप्रभं प्रभाशून्यम् अचेतनं कीचकं प्रभञ्जनेन वायुना अस्तं भग्नं गिरिशि[ख]रमिव पर्वतशृङ्गमिव ददृशुः ॥४७॥

---

१. °त missing in A.
२. °मपास्य B.
३. °दरि MS.
४. यज्ञौरव MS.
५. किंभूतः न MS.

तस्मिन् हते स्वविषयावधिवप्रभूते[१]
छन्ने बले परयशोभिरिव प्रभूते।
मेने कुरूनधि[२]गतान् स सुतोरणेन
कार्यं पुरेण[३] च नृपः ससुतो रणेन ॥४८॥

The King prepares to fight the Kurus

बृहत्पवनवेगधूतिभिरपादपः पादप-
श्च्युत[४]स्थितिरिव क्षणेन गिरिसानुजः सानुजः[५]।
स तत्र पतितो यथा च गिरिसन्निभः सन्निभः
प्रबोध्य[६] हरिमात्मनाद्रिविवरोषितं रोषितम् ॥४९॥

तस्मिन्नित्यादि ॥ स्वविषयावधेः स्वदेशसीमायाः प्राकारसदृशे तस्मिन् कीचके हते (स)ति, प्रभूते बहुले बले सैन्ये सामर्थ्ये वा (परयशोभिरिव) च्छन्ने आवृते सति, ससुतः पु[७]ः सहितः स नृपो विराटः कुरून् दुर्योधनादीन् (रणेन) उपग[fol. 27a]तान् समीपप्राप्तान् मेने। सुतोरणेन शोभनबहिर्द्वारेण पुरेण च कार्यं मेने[८],॥४८॥

बृहदित्यादि ॥ स कीचकः सानुजोऽनुजैः सहितस्तत्र क्षणेन पतितः। क इव—पादप इव। किंभूतः—बृहतः पवनवेगस्य धूतिभिः कम्पनैः अपादपः। पादो मूलं तत्पातीति पादपः, न पादपः अपादपः, उन्मूलित इत्यर्थः। अतएव च्युतस्थितिः, च्युता विगलिता स्थितिरवस्थानं यस्य ईदृशः। गिरेः पर्वतस्य सानौ जातः। यथा गिरिसन्निभः पर्वतसदृशः सन् प्रशस्त इभो हस्ती अद्रिविवरोषितं पर्वतगुहावासिनं रोषितं कोपितं हरिं सिंहम् आत्मना प्रबोध्य जागरयित्वा पततीत्यर्थः। पृथ्वीच्छन्दः ॥४९॥

---

१. सुविषयाबुद्धिवप्रभूते B २. कुगिरूनुप° A.
३ पुरा न ( for पुरेण) B ४ च्युता A
५. B omits the second सानुजः ६ प्रबुध्य B
७. MS. repeats प्रभूते बहुले after this Probably a line is lost here: because the commentary does not explain रणेन and परयशोभिः।

वज्रे[1]णायमुता[2]हिना गिरिभिदा वातेन वा तेन वा[3]
कृष्णामन्युहुताशनेन दुरितैरीशायितः शायितः[4] ।
इत्युक्त्वा ददृशे पुरा सहृदयक्षोभी तया भीतया
न स्यात्कः पतितेऽनिमित्तमचले सन्देहवान् देहवान् ॥५०॥
इत्यस्तेऽहनि लोहितो रविरभूत् सिन्दूरतो दूरतो
ज्योतिः प्रादुरभूद् दिवाकरकरैरिन्दूषितं दूषितम् ।

वज्रेणेत्यादि[5] ॥ अयम् ईशायितः ईश इव आचरितः कीचको वज्रेण शायितः, उत अहिना सर्पेण वा शायितः । गिरिभिदा पर्वत-भेदकेन वायुना वा शायितः । कृष्णाया मन्युरेव हुताशनस्तेन वा शायितः, दुरितैर्वा शायितः । इति उक्तप्रकारं तया पुरा विराटस्य पुर्यां हृदयक्षोभी स कीचको ददृशे दृष्टः । अर्थान्तरमाह[6]—अनिमित्तम् अकारणम् अचले पर्वते पतिते सति को देहवान् शरीरी [सं]देहवान् न स्यात्, अपि [fol. 27b] तु सर्व एव[7] सन्देहयुक्तो भवतीत्यर्थः ॥५०॥

इतीत्यादि ॥ इति लोकसन्तापेन अहनि दिने अस्ते[8] गते सति रविः सूर्यः सिन्दूरतो दूरतो सिन्दूरादप्यधिकं लोहितो रक्तोऽभूत् । दिवाकरकरैः सूर्यांशुभिर्दूषितं परिभूतम् इन्दौ चन्द्रे उषितं स्थितं ज्योतिस्तेजः प्रादुरभूद् आविर्भूतम् ।

---

१. वक्र॰ A.
२. ॰सुता॰ B.
३. वातेन वा शायितः B for वातेन वा तेन वा
४. सम्यक् सदेशायितः B. for ईशायितः शायितः
५. अ is added 1 m.
६. अथा॰ MS
७ सर्वत्र for सर्व एव MS
८. अन्ते MS

साभूत्तत्पुरवासिनां विमनसामायामिनी यामिनी
निद्रावर्जितचक्षुषां कुरुचमूं विन्ध्यायतां ध्यायताम् ॥५१॥

इति नीतिवर्मविरचिते[1] कीचकवधे महाकाव्ये तृतीयः सर्गः ॥

सूर्यास्तगमात्[2] तत्तेजोऽपगमात् प्रसन्नकिरणश्चन्द्रः समुदित इत्यर्थः । सा यामिनी[3] विमनसां तथा विन्ध्यायतां विन्ध्यव[द्] दुर्गदीर्घां कुरुचमूं दुर्योधनसैन्यं[4] ध्यायताम् अतएव निद्रावर्जितचक्षुषां जाग्रतां तत्पुरवासिनाम् आयामिनी दीर्घाभूत् । जागरणे रात्रिर्दीर्घेव प्रतिभासते । आयामो दैर्घ्यं तद्योगादायामिनी । शार्दूलविक्रीडितं छन्दः ॥५१॥

इति कीचकटीकायां तृतीयः सर्गः ॥

---

१ B omits this phrase.
२ सूर्यो॰ MS.
३. Added u. m.
४. दूयोधनस्या MS

# चतुर्थः सर्गः ।

ततः प्रवृत्त्या श्रवणप्रयुक्तजननीतया ।
कृता कुरुपतेर्बुद्धिरुद्योगजननी तया ॥१॥
यस्य क्षितिपतेर्बुद्धिर्यद् बुद्धिमनुजायते ।
स तं निःशङ्कभोग्यत्वात् स्त्रीकृत्यमनुजायते ॥२॥
येनाहमधिकोऽस्मीति क्रियते गो[१]रवज्ञया ।
स कथं ध्रियते[२] बुद्ध्या व्यवस्थागौरवज्ञया[३]॥ ॥

Duryodhana makes an effort to steal the cattle of Virāṭa.

An incidental digression into questions of state-craft and policy.

तत इत्यादि ॥ ततोऽनन्तरं श्रवणे आकर्णने[४] प्रयुक्तेन जनेन नीतया प्रापितया प्रवृत्त्या कीचकवधवार्तया कुरुपतेर्दुर्योधनस्य बुद्धिः उद्योगजननी तयो[द्यो]गकरणी[५] कृता ॥१॥

यस्येत्यादि ॥ 'इति बुद्ध्या कर्तव्यं स्वयं निश्चित्य मत्स्यगोत्रया [सेनया] संजग्मे' इति नवमेनान्वयः । यस्य क्षितिपतेः राज्ञो बुद्धिः यद्बुद्धिम् अनुजायते यस्य जनस्य बुद्धेः प[fol. 28a]आदुत्पद्यते, यद्बुद्ध्यनुसारिणी भवति, स जनस्तं राजानं निःशङ्कभोग्यत्वात्[६] स्त्रीकृत्य स्त्रियं कृत्वा स्वयं मनुजायते पुरुष इवाचरति । तेन स्वायत्तसिद्धिरेव राजा प्रशस्यः, न सचिवायत्तसिद्धिरित्यर्थः ॥२॥

येनेत्यादि ॥ येन राज्ञा अहमधिकोऽस्मीति कृत्वा अवज्ञया हेलया[७] गौर्वाणी क्रियते, अविचार्य गद्यते, स नृपति[ः] व्यवस्थायां यद्गौरवमादरस्त[म् जानाति या][८] तया बुद्ध्या स कथं

---

१ गो B
२ ध्रियते B.
३ °ज्ञा° B
४. कर्णे वा MS
५ °करिणी MS.
६. °भा for भो in भोग्य MS
७. म corrected into ल u m
८. मादरस्तव MS.

कथं नरपतेर्बुद्ध्या पृथिव्यां प्रथमानया ।
स्वाधीनाप्यन्यतः शक्तिः प्रार्थ्यते[1] प्रथमानया ॥ ४ ॥
पात्यते निशितः खड्गः स्वेषु मर्मस्वयं स्वयम् ।
यद्राज्ञा ज्ञाप्यते गुह्यं स्वार्थसिद्धिपरः परः ॥ ५ ॥
ये वा स्व[2]धनुषां शक्तिं[3] शरान्न विदुरस्यताम् ।
ते गिरं[4] प्रतिपद्यन्तां भयेन विदुरस्य ताम् ॥ ६ ॥

ध्रियते, स कथं जीवतीत्यर्थः । सहसा न किमपि वक्तव्यमिति भावः ॥ ३ ॥

कथमित्यादि ॥ पृथिव्यां प्रथमानया[5] प्रख्यातिं गच्छन्त्या नरपतेः [ बुद्ध्या ] स्वाधीनापि प्रथमा[6] प्रभावजा श्रेष्ठा वा शक्तिः कथमन्यतः प्रार्थ्यते । यस्तावत् सचिवायत्तसिद्धिः स[7] शक्तिमन्यतः प्रार्थयतु नाम, अहं पुनः स्वायत्तसिद्धिः कथमन्यतः शक्तिं प्रार्थयिष्यामि (?) इत्यर्थः ॥ ४ ॥

पात्यत इत्यादि ॥ राज्ञा स्वार्थसिद्धिपरः परः शत्रुर्यद् गुह्यं ज्ञाप्य[ ते ] अयं[8] गुह्यज्ञापनरूपोऽर्थ एव खड्गः[9] स्वेषु स्वकीयेषु मर्मसु स्वयमात्मना पात्यते। मर्मसु ख[ड्ग][10]पा[ते]न यथा असंशयितो[11] मृत्युस्तथा शत्रुषु गुह्यप्रकाशनेनेति भावः । एतेन मन्त्रमतिगूढं कुर्यादिति सूचितम् ॥ ५ ॥

ये वेत्यादि ॥ ये राजा|fol. 28b| नः शरान् बाणान् अस्यतां

---

१ प्रकथ्यते A २ ये चाद्य for ये वा स्व० A
३ शक्तिः A. ४ गिरिं B
५. प्रथमात्यय MS
६ प्रथममा MS
७ सा MS
८ स्वयं MS
९ खक्तः MS
१० Space for one letter here (in MS)
११. र्थ for अ MS

गुह्याख्यानात् परार्थत्वाद् वृत्ताच्च भुवि दुष्यतः ।
यस्त्रस्यति वसत्यस्मिन् नित्यं लक्ष्मीर्विदुष्यतः ॥ ७ ॥
स्वातन्त्र्यं स्वामिनो वृत्ति[1]र्यः स्वशक्त्या न पाति ताम्[2] ।
स भृत्यैरवगृह्णद्भिः श्रियं वेत्ति न पातिताम् ॥ ८ ॥

क्षिप्यतां स्वधनुषां शक्तिं न विदुः न जानन्ति, ते जना भयेन विदुरस्य धृतराष्ट्रकनिष्ठस्य तां गिरं प्रतिपद्यन्ताम् अङ्गीकुर्वन्तु । अहं पुनः स्वधनुःशक्तिं जानन् कथमिव तद्वचसा निवृत्तां भविष्यामीत्यर्थः[3] । विदुरो हि विराटदेशगमने तं निषिद्धवान् इति पुराणकथा ॥ ६ ॥

गुह्याख्या[4]नेत्यादि ॥ यो जनः परार्थत्वात् परप्रयोजनकरत्वाद् गोप्यक[थ]नात्त्रस्यति[5] [दुष्यतो] वृत्ताद्[6] दुष्टाच्चरित्राच्च त्रस्यति अथवा वृत्ताच्चरित्रा[द्] हेतोर्दुष्टाज्जना[त्] त्रस्यति[7] अतोऽस्मात्कारणाद् अस्मिन् विदुषि पण्डिते लक्ष्मीर्नित्यं वसति ॥ ७ ॥

स्वातन्त्र्यमिति ॥ स्वातन्त्र्यं स्वतन्त्रता स्वामिनः प्रभोर्वृत्तिः, तां वृत्तिं स्वशक्त्या निजसामर्थ्येन यो न पाति न रक्षति सोऽ[व]गृह्णद्भिः निग्रहं कुर्वद्भिर्भृत्यैः पातितां[8] नाशितां श्रियं न वेत्ति । यो राजा भृत्यपरवशो भवति भृत्यैरेव तस्य श्रीर्नीयत इत्यर्थः ॥ ८ ॥

---

१ वृत्तिं A
२ पातितम् A
३ मिवृत्तो चनि[or लि]ष्यामीत्यर्थः MS
४ गुत्यार्था° MS
५. There is space for one letter after क and then नात्त्वस्यतो in MS.
६ वुद्धात् MS
७ श्रंस्यति MS
८ पाडितां MS

इति बुद्ध्या परार्थत्वाद् भृशमुद्विजमानया ।
स्वयं निश्चित्य कर्तव्य[1]मत्यक्तद्विजमानया ॥९॥
द्विधा विभक्तया गत्वा सेनया पथि गोत्रया ।
विगृह्यासनमास्थाय संजग्मे[2] मत्स्यगोत्रया ॥१०॥
अथ गोहरणं राजा भृशमुद्वेजनाज्जनात् ।
शुश्राव कृतमार्तं[3] च गोपानां भैरवं रवम् ॥११॥

Virāṭa goes to the rescue of the cattle

इतीत्यादि ॥ श्लोकद्वयस्यैकत्र योजना क्रियते । इति उक्तप्रकारेण परार्थत्वात् शत्रुगतप्रयोजनत्वाद् भृशमत्यर्थम् उद्विजमानया उद्वेगं[4] प्राप्नुवत्या बुद्ध्या स्वयं कर्तव्यं निश्चित्य,अस्यते काण्डोऽ [fol. 29a] नेनेति असनं धनुर्विगृह्य गृहीत्वा स [दुर्योधनः] यत्नपरो भूत्वा, अथवा विगृह्य युद्ध[5]परो भूत्वा आसनं स्थितिं चास्थाय अवलम्ब्य विग्रहमासनं च गुणद्वयमेव अवलम्ब्य, अत्यक्तो द्विजानां ब्राह्मणानां मानः पूजा यया ईदृश्या पथि[6] द्विधा विभक्तया दक्षिणोत्तरदिग्द्वयभेदेन दक्षिणगोग्रहोत्तर-गोग्रहार्थं द्विप्रकारेण कृतविभागया गोत्रया गां त्रायत इति[7] गोत्रा ईदृश्या सेनया गत्वा मत्स्यस्य गोत्रया गोसमूहेन संजग्मे सङ्गतो बभूव ॥ ९, १० ॥

अथेत्यादि ॥ अथानन्तरं राजा विराटः भृशम् उद्वेजनाद् उद्वेगकार-काज् जनाद् गोहरणं शुश्राव श्रुतवान् । गोपानां कृतं तैरेव विहितं पर्याप्तं वा भैरवं भीषणम् आर्तं रवं शुश्राव ॥११॥

---

१ कर्तव्यं राज्ञया नित्य० B

२. सजग्मे A

३ कृतवर्णां A

४ उद्विग्नं MS

५ युद्ध MS

६ पातुर्थि MS

७. गां तेजदाय इहति MS

निर्ययौ च कृते तस्मिन् रन्ध्र[1]सञ्चारिणारिणा ।
सज्जस्तिष्ठति कर्तव्ये प्रायेण रिपुमान् पुमान् ॥१२॥
निर्ययुस्तत[2]धन्वानः सर्वे च पुरुषा रुषा ।
कृतं बाणैश्च तिमिरं द्विषामनिशि तैः शितैः ॥१३॥ Taking advantage of his absence, Duryodhana approaches from another direction
गते तस्मिन् दिशा प्राप्तं तद्रक्षाशून्ययान्यया[3] ।
शुश्रुवुर्मत्स्यघातित्वान्नृपं कौरवकं[4] वकम् ॥१४॥

निर्ययौ चेत्यादि ॥ रन्ध्रसञ्चारिणा कीचकविनाशरूपे छिद्रे सञ्चरणशीलेन [अरिणा कृते तस्मिन् सति स विराटः निर्ययौ] । शत्रुमान् पुरुषः कर्तव्ये करणीये सज्ज एव तिष्ठति ॥१२॥

निर्ययुरित्यादि ॥ ततधन्वानः आरोपितधनुषः सर्वे पुरुषाश्च निर्ययुः । तैः पुरुषैः रुषा क्रोधेन [अनिशि] अरात्रावेव[5] शितैः शाणितैः बाणैः द्विषां शत्रूणां तिमिरं कृतम् ॥१३॥

गत इत्यादि ॥ [6][fol. 29b] तस्मिन् विराटे गते सति तद्रक्षाशून्यया तेनारक्षितया अन्यया दिशा प्राप्तमागतं कौरवकं नृपं दुर्योधनं शुश्रुवुः । किंभूतम्—मत्स्यघातित्वात् मत्स्य[7]देशीयघातित्वाञ्च वकं पक्षिविशेषमिव । दक्षिणस्यां दिशि सुशर्मा नाम त्रिगर्ताधिपो विराटस्य गा वेष्टितवान् । तन्निवर्तनाय विराटस्तत्र चलितः । अनन्तरमुत्तरया दिशा दुर्योधनः समागतः । तत्र उत्तरनाम्नो विराटतनयस्य सारथिर्भूत्वा अर्जुनो जगामेति पुराणकथा (विराटपर्वणि गोहरणपर्व अ० २४-४०) ॥१४॥

---

१. °अत्त B
२ तष° A.
३. °शून्यया शून्यया A
४. केरे B
५. °रात्रावै MS
६. There is a redundant ग here at the end of the folio
७ The passage किंभूतो गृध्रः अशान्तवपुः . सम्प्रदानसंज्ञा from the commentary on *śl* 20-21 below is wrongly put after मत्स्य and apparently struck out by enclosing it with brackets in red ink.

यदा रुरुदुरत्यर्थं गोपाः सन्तापपाण्डवः ।
तदा कुमारमुत्साह्य[1] तान् कुरून्
प्राप पाण्डवः[2] ॥१५॥

Arjuna urges Virata's son Uttara to fight

अथासन्नं कुमारस्य पताकाशबलं बलम् ।
तूर्यघोषश्च शत्रूणामकरोदुभयं[3] भयम् ॥१६॥
ततोऽपयान्तं तं तस्मात् पार्थोऽरिदमनो रथात् ।
जग्राह चलितोत्साहं रिपुच्छेदमनोरथात् ॥१७॥

and excites his failing courage with a speech

यदेत्यादि ॥ सन्तापेन गोहरणमञ्जातेन पाण्डवो धूसरा गोपा यदा अत्यर्थं रुरु[दुः] क्रन्दितवन्तः, तदा कुमारम् उत्तरम्[4] उत्साह्य उत्साहिनं[5] कृत्वा तान् कुरून् पाण्डवोऽर्जुनः प्राप प्राप्तवान् ॥१५॥

अथेत्यादि ॥ शत्रूणां दुर्योधनादी[fol. 30a]नां पताकाभिः श्वेतपीतनानावर्णाभिः शबलं नानावर्णं बलं सैन्यं तूर्यघोषो मृदङ्गनादः एतदुभयं कुमारस्य उत्तरस्य भयम् अकरोद् अजनयत् । भयमेव वा त्रासभ्रम् अकरोत् ॥१६॥

तत इत्यादि ॥ ततोऽनन्तरं रिपुच्छेदमनोरथात् शत्रून्मूलनाभिलाषाच् चलितोत्साहं त्यक्तोद्यमं[6] तथा तस्माद्रथाद् अपयान्तं तम् उत्तरम् अरिदमनः पार्थोऽर्जुनो जग्राह धृतवान्[7] ॥१७॥

---

१ साद्य B

२ This line is missing in A.

३ भ is missing A

४. °मुत्त° added I m

५. उत्साहयित्वा (?) MS

६ त्यक्तोमभं or त्यक्तोमयं MS

७. वृतवान् MS

भीतिराविष्कृता तेन महती राजसेनया ।
तामेवमुक्त्वाशमयन्निन्दितां राजसेनया ॥१८॥
द्विषतां मूलमुच्छेत्तुं राजवंशादजायथाः ।
द्विषद्भ्यस्त्रस्यसि[1] कथं वृकयूथादजा यथा ॥१९॥

भीतिरित्यादि ॥ तेन राजसेन सत्त्वरहितेन रजोवशादागतेन कुमारेण या भीतिराविष्कृता प्रकाशिता, राजसेनया क्षत्रियसैन्येन निन्दितां [तां] भीतिम् एवमुक्त्वा अशमयत्, प्रस्तुतत्वाद् अर्जुन एव ॥१८॥

उक्तिप्रकारमाह—द्विषतामित्यादि । द्विषतां शत्रूणां मूलमुच्छेत्तुं मूलोच्छेदं कर्तुं राजवंशात् क्षत्रियवंशात् नृपवंशाद् वा अजायथाः जातोऽसि । इदानीमस्तु तावद् द्विषन्मूलोच्छेदनम्, वृकयूथाद् व्याघ्रभेदसमूहाद् अजा यथा छागी इव कथं त्रस्यसि बिभेसि । अजेति स्त्रीलिङ्गेन सह पुंलिङ्गस्योपमानमपि न दोषाय, अजाया एव भीतौ प्रसिद्धत्वाद् उद्वेगा[2]जनकत्वाच्च । तथा च द[fol. 30b][3]ण्डी—'न लिङ्गवचने भिन्ने न न्यूनाधिकतापि च । उपमादूषणायालं यत्रोद्वेगो न धीमताम्' ॥ (२।५१)। उदाहरणं च तस्यैव—'स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा[4] स्त्री पुमानिव' (२।५२) । अजाश्छागा इति कश्चित्, तदसमीचीनम्; यतः, अजा इति बहुवचनान्तेन एकवचनान्तस्योपमाने वचनभेदो नामोपमादोषस्तिष्ठत्येव, तथा न भवति ॥१९॥

---

१ °भ्यः स्त्रस्यसि A

२ ग for °गा MS

३ A has a redundant द at the beginning of the folio

४ वक्त्र्येष MS

त्वया हतानां समरे द्विषां तव पुरस्थितः ।
गृध्रः कृष्णातु मज्जानमशान्त[1]वपुरस्थितः[2] ॥२०॥
भृशं कुप्यामि[3] भवते तीव्रं भयममुञ्चते ।
युध्यस्व[4] भजतां कीर्तिरिमं लोकममुं च ते ॥२१॥
इत्यर्जुनोऽस्मीति वदन् जनयित्वा निरुत्तरम् ।
रथमारोपयामास कुलश्री[5]योनिरुत्तरम् ॥२२॥

Revealing himself as Arjuna he becomes his charioteer in the fight

त्वयेत्यादि ॥ तव पुरः[6]स्थितो गृध्रः त्वया हतानां द्विषां मज्जानं कृष्णातु[7] आकृष्याकृष्य खादतु[8] । 'कुष निष्कर्षे' (धा०९।४६) इति क्रैयादिको धातुः । किंभूतो गृध्रः —अशान्तवपुः मज्जा[9]कर्षणवशादस्थिर-शरीरः, तथा स्थितः, बहुषु शत्रुषु प्रत्येकं पतनादेकत्रानवस्थितः ॥२०॥

भृशमित्यादि ॥ तीव्रमेकान्तं भयम् अमुञ्चतेऽत्यजते भवते तुभ्यं भृशमत्यर्थं कुप्यामि । 'यस्मै कुप्यतीति वक्तव्यम्' (का०२।४।१०, वृ) इति वचनात् सम्प्रदानसंज्ञा । अतो हेतोर्युध्यस्व युद्धं कुरुष्व । ते तव कीर्तिरिमं[10] जीवलोकम् अमुं परलोकं च, भूलोकं स्वर्लोकम्, मित्रलोकं शत्रुलोकं वा, भजताम् आश्रयतु ॥२१॥

इतीत्यादि ॥ इति पूर्वोक्तमुक्त्वा अर्जुनोऽस्मीति वदन् कुलश्रियाः स्व[11]वंशलक्ष्म्या [योनिः] उत्पत्ति [fol. 31a] स्थानं कारणं स [उ]त्तरं निरुत्तरमुत्तरशून्यं जनयित्वा रथमारोपयामास ॥२२॥

---

१ गृध्र आकृष्य मजमसान्त॰ B
२ ॰रास्थितः B
३ क्रुध्यामि B
४ युध्यस्य B
५. कुलश्री B
६ पुर MS
७ कुषातु of which कृष्णा (?) written u.m.
८ खदतु MS
९. ल for म MS
१० कीर्तिरियं MS.
११. न for स्व MS

इत्युक्त्वा स शमीं गत्वा कुर्वन्नप्रतिमं दरम् ।
प्राप्तः पार्थोऽनुकुर्वंश्च रथाटोपेन मन्दरम् ॥२३॥
अथ स्त्रीसदृशं प्राप्तमिच्छन्तं विजयं जयम् ।
बुद्ध्वाब्रवीन्नृपं द्रोणश्छद्मना सहितं हि तम्[१] ॥२४॥
इयं नूनमिदं नारी रथवृन्दं रणोत्सुकम् ।
बहुशस्त्रीत्यवध्यत्वान्मन्यते सदृशं तृणैः[२] ॥२५॥

Drona, recognising him to be Arjuna in spite of his disguise, communicates his fears to Duryodhana in a punning speech

इतीत्यादि ॥ सोऽर्जुन इत्युक्त्वा शमीं शमीवृक्षं गत्वा अप्रतिमम् असदृशं दरं भयं कुर्वन्, अर्थात् तस्यैव जनयन्, रथस्य आटोपेन शौटीर्येण[३] मन्दरं मन्दराचलमनुकुर्वन् प्राप्तः समागतश्च । विराट-राजधानीप्रवेशे पाण्डवाः सर्वाण्येवायुधानि शमीवृक्षे संस्थापितवन्तः, अर्जुनस्तान्येवोत्तरगोगृहे[४] समानीतवानिति कथा पुराणे (विराटपर्व अ० ३७) ॥२३॥

अथेत्यादि ॥ अथानन्तरं जयमिच्छन्तं स्त्रीसदृशं षण्डरूपधारिणं विजयमर्जुनं प्राप्तमागतं बुद्ध्वा द्रोणः [तं] नृपं दुर्योधनं छद्मना कपटेन सहितमब्रवीत्, श्लेषोक्त्या जगादेत्यर्थः ॥२४॥

इयं नूनमित्यादि ॥ इयं नारी स्त्रीति हेतोरवध्यत्वाद् इदं रणोत्सुकं[५] रथवृन्दं रथसमूहं बहुशस्तृणैः सदृशं मन्यते । अथ च—ना पुरुषः अरिः शत्रुरर्जुनः इयद् एतत् परिमाणम् इदं रणोत्सुकं रथवृन्दं बहुशस्त्रि

---

१ हसितं सितम् B

२. Both A and B put Sl 26 before Sl 25 so does S I

३ MS has उर्येण of which उ is ticked off, apparently for correction which is forgotten Our emendation is conjectural

४. °त्येव त्तर गोग्रहे MS

५ रथणो° MS

इयं त्वच्चरितैः खिन्ना धीरासन्ना च लज्जया ।
जिगीषत्यस्त्रसंस्कारै[1] रहिता[2] वनितापि नः ॥२६॥
यदस्याङ्गेषु सामर्थ्यं चिन्त्यते स्त्रीति न त्वया[3] ।
मन्ये सत्यं तदाकारो नायमस्त्री भविष्यति ॥२७॥

प्रचुरशस्त्रयुक्तमिति हेतोरवध्यत्वात् तृणैः सदृशं मन्यते । बहुशस्त्रात्यत्र प्रथमपक्षे 'शषसेष्वघोषपरेषु विसर्जनीयस्य[4] [लोपो वा], (का० १।५।६, दुर्गसिंहकृतवृत्तिटीकायाम् प: ४८५) इत्यनेन विसर्गलोपः[5] । नारी रथवृन्दमित्यत्र 'रो रे लोपं [fol. 31b] स्वरश्च पूर्वो दीर्घः' (का० १। ५ । १७) इति विसर्जनीयरेफस्य लोपः, पूर्वस्वरश्च[6] दीर्घः ॥२५॥

इयमित्यादि ॥ इयं धीरा धैर्यशालिनी लज्जया सन्ना अवसन्ना च त्वच्चरितैः खिन्नेति हेतोः वनिता नोऽस्मान् जिगीषति जेतुमिच्छति । गोहरणखेदाल्लज्जामप्यपहाय [अस्त्रसंस्कारै रहिता] वनितापीयं जेतुं चेष्टत इत्यर्थः । अथ च—अहितावनितापिनः शत्रुभूमितापनशीलस्यार्जुनस्य त्वच्चरितैः[7] पाशक्रीडादिभिः खिन्ना संजातखेदा, तथा आसन्ना च लज्जया आसन्नः समीपवर्ती अचलन् स्थिरो जयो यस्या ईदृशीयं धीः बुद्धिः अस्त्रसंस्कारैः अस्त्राणां विशेषज्ञानैः जिगीषति जेतुमिच्छति ॥२६॥

यदित्यादि ॥ स्त्रीति कृत्वा अस्य सम्मुखागतस्य जनस्य अङ्गेषु सामर्थ्यं बलं यत्त्वया न चिन्त्यते न गण्यते तत् सत्यं मन्ये । तदाकारः स्त्र्याकारोऽयं न अस्त्री भविष्यति, किन्तु स्त्री भविष्यत्येव । अथ च—अङ्ग सम्बोधनं । अस्य अर्जुनस्य इषु-

१ त्य is missing in A
२ ता missing in A
३ त्व missing in A
४ शषमेसु घोषपरेसु MS
५ र्ग added l m
६ स्वरस्य MS
७ त्वच्चरितं MS

अयं न नारीविजयः[१] प्राप्तः कीर्तिकरः क्षितौ ।
प्रचलद्वलयं[२] जेतुं शरीरं न त्वमर्हसि[३] ॥२८॥
अथ भीष्मोऽब्रवीत् पश्यन् दूरेऽध्वनि धनञ्जयम् ।
निर्नीषति[४] किलायं नः[५] शौर्येण निधनं जयम् ॥२९॥ In the same strain speaks Bhīṣma

सामर्थ्यं बाणशक्तिः स्त्रीति कृत्वा यत्त्वया[६] [न] चिन्त्यते तद् असत्यं मन्ये । यतः तदाकारः स्त्रीवेशधारी ना पुरुषोऽयं अस्त्री अस्त्रवान् भविष्यति ॥२७॥

अयमित्यादि ॥ अयं नारीविजयः स्त्रिया जयः क्षितौ पृथिव्यां कीर्तिकरो न प्राप्तः, यतः प्रच[fol. 32a]लद्वलयं चञ्चलकम्बुवलययुक्तं शरीरं जेतुं त्वं नार्हसि । राजा त्वं स्त्रियं जेतुं नार्हसीति भावः । अथ च—अयं क्षितौ [कीर्तिकरो] यशस्करो[८]विजयोऽर्जुनः प्राप्तः आगतः । नारी न, स्त्री न भवति । हे प्रचलद्वल पलायमानसैन्य अस्थिरसामर्थ्य वा, शरीरम् शरोऽस्यास्तीति शरी काण्डीरस्तम्[९] ईरयति कम्पयति इति शरीर ईदृशम् अर्जुनं जेतुं त्वं नार्हसि शक्तो न भवसि । न प्राप्त इत्यर्थः[१०] ॥२८॥

अथेत्यादि ॥ अथानन्तरं दूरेऽध्वनि पथि धनञ्जयमर्जुनं पश्यन्, [भीष्मः] अब्रवीत्--किमर्जुनः शौर्येण पराक्रमेण नोऽस्माकं जयं निधनं विनाशं निनीषति नेतुमिच्छति । अयमस्मज्जयं वाञ्छति (?)[११] इत्यर्थः ॥२९॥

१ No *visarga* in A
२ ल missing in A
३ अर्हति B
४ निनीस० A.
५ नौ B
६ यद्र MS.
७ पुरुषोभयं MS
८ यशरो MS.
९. वकाराडी वस्त MS
१०. प्राप्तमि० MS
११ शयिष्यति (!) MS.

अयं स नियतं गोपः परोक्षहृत[1]गोधनः ।
गोनिवृत्तिरितो येन विशिखैः कर्तुमिष्यते ॥३०॥
साक्षादिन्द्रसुतस्यापि विक्रमोऽयं न[2] विद्यते ।
भवता श्रूयतां सत्यं[3] रथो नायमपार्थकः ॥३१॥

अयमित्यादि ॥ परोक्षे हृतं गोधनं यस्य ईदृशो नियतमयं स गोपः, यस्य गावोऽस्माभिर्हृताः[4] सोऽयं गोपः समागत इत्यर्थः । येनाधुना[5] इतोऽस्मत्सकाशाद् विशिखैर्बाणैः गोनिवृत्तिः कर्तुमिष्यते । अथ च— नियतमयं परः श्रेष्ठः, तथा अक्षैः पाशकैर्हृता गौः पृथ्वी धनानि च यस्य ईदृशः स गां पृथ्वीं पातीति गोपोऽर्जुनः, येनानेन इतः सकाशाद् विशिखैर्बाणैः गोनिवृत्तिः कर्तुमिष्यते । अस्य पृ[fol. 32b]-थ्वी अक्षैर्भवता हृता, अधुना[6] पुनर्बाणै[7]र्गवां निवर्तनमिष्यत इत्यर्थः ॥३०॥

साक्षादित्यादि ॥ साक्षात् प्रत्यक्षम् इन्द्र[8]सुतस्य जयन्तस्यापि अयमीदृशो विक्रमो न विद्यते नास्ति । 'विद सत्तायां' धातुः (धा० ४। ६२)। भवता सत्यं श्रूयताम् अयं रथः अपार्थका न निष्प्रयोजनो न भवति । अवश्यमेवानेन रथेन किंचित् प्रयोजनमनुष्ठेयमित्यर्थः । अथ च—इन्द्रसुतस्य अर्जुनस्य[9] साक्षात् प्रत्यक्षोऽपि अयं विक्रमो न विद्यते न ज्ञायते । भवता सत्यं श्रूयताम् अयं रथः अपार्थकः पार्थेन अर्जुनेन शून्यो न भविष्यति । अत्र रथेऽर्जु[न]स्तिष्ठ-त्येवेत्यर्थः ॥३१॥

---

१. ०कृत B
२ नाद्य for ऽयं न B
३. नित्यं A.
४ गावोस्याभि, then space for one letter, then ता in MS
५. येनार्थना MS
६ अर्थना MS ७ वापै० MS
८. प्रत्यक्षस्त्येन्द्र MS ९. इ for र्ज MS.

अयं रथस्ते सुरयो निजं बिभ्रत् पराक्रमम् ।
दृप्तारिमानवे गच्छन्नाहवे जेतुमर्हति ॥३२॥
शत्रुशोभात्ययं युद्धे कुरु राजत्वमाश्रयन् ।
ननु वृत्तेन विजयो दुरापस्ते न कर्मणा ॥३३॥

अयमित्यादि ॥ निजं ते तव स्वकीयं पराक्रमं बिभ्रत् सुरयः अतिशयितवेगोऽयं रथः दृप्तारिमानवे, दृप्तो दर्पशाली अरिमानवः शत्रुमनुष्यो यत्र ईदृशे, आहवे युद्धे[1] गच्छन् जेतुमर्हति । अथ च—सुरा योनिः उत्पत्तिकारणं यस्य स सुरयोनिः इन्द्रसुतत्वादर्जुनः, तस्माज्जातं पराक्रमं बिभ्रत् । अथवा परं शत्रुम् आक्रामति इति पराक्रमः, 'पचाद्यच्' (का०।४।२।४८) । सुर एव योनिरुत्पत्तिहेतुः, तस्माज्जातं सुरयोनिजम् [ईदृशं] पराक्रमं द्विषदाक्रामकमर्जुनं बिभ्र[fol. 33a]दयं रथो दृप्तारिमानवेगच्छन्नाहवे दृप्तस्य अरेर्मानवेगाभ्यां छन्ने आहवे ते त्वां जेतुमर्हति ॥३२॥

शत्रिवत्यादि[2] ॥ ननु भो दुर्योधन युद्धे राजत्वं क्षत्रियत्वं नृपत्वं वा आश्रयन् शत्रोः शोभाया अत्ययं विनाशं कुरु । ते त[व] वृत्तेन गोहरणरूपेण कर्मणा विजयो जयो दुरापो न । येन प्रथममेव गावो हृतास्तस्य शत्रुजयो दुरापो न भवत्येव । अथ च—युद्धे शत्रुं श्यति[3] तनूकरोति इति शत्रुशोऽयमर्जुनः कुरुराजत्वं कुरुश्रेष्ठत्वमाश्रयन् भाति । नु भो वृत्तेन तेन कपटद्यूतादिना कर्मणा विजयोऽर्जुनः दुरापो न । तत् स्मृत्वार्जुन एव आगत इत्यर्थः ॥३३॥

१ यु० added 1 m.
२ शद्वि० MS
३. पश्यति MS

इमे जिता येन गावो[1] क नु तेऽसौ बलोदयः ।
स निहन्तु द्विषो मूलमकीर्ते रक्ष देव नः ॥३४॥
सभूमिस्ते यतो भोग्या जातासौ बलसंश्रयात् ।
पार्थलक्ष्मीस्ततो विद्धि[2] विजयं नः[3] पुरः[4]स्थितम् ॥३५॥

इमेत्यादि ॥ येन बलस्योदयेन इमे गावो जिताः नु भोः असौ ते तव बलोदयः क्व गतः, स द्विषां मूलं [नि] हन्तु शत्रुमुन्मूलयतु । हे देव राजन् नोऽस्मान् अकीर्तेः सकाशाद् रक्ष । अथ च—येन इमे पाण्डवा जि[ताः] सोऽदयः सौबलः शकुनिः क गतः, सोऽकीर्तिमूलम् अक्षदेवनः पाशक्रीडाकरो द्विषः शत्रून् निहन्तु ॥३४॥

सेत्यादि ॥ सभूमिः भूम्या सहितासौ पार्थलक्ष्मीर्युधिष्ठिरस्य सम्पद् यतस्ते तव बलसंश्रयात् [fol. 33b] भोग्या जाता, ततो हेतोः विजयं जयं नोऽस्माकं पुरःस्थितं विद्धि जानीहि । यस्य बलेन पार्थलक्ष्मीरेव भुज्यते तेन विराटो जेतव्य इति किं चित्रम् । अथ च—सौबलस्य शकुनेः संश्रयात् सभूमिः पार्थलक्ष्मीस्ते यतश्चौर्याद् भोग्या जाता । क्षत्रियस्य द्यूतादिना जयश्चौर्यमेव । यतः पार्थलक्ष्मीस्त्वया भुज्यते ततो हेतोर्विजयम् अर्जुनं पुरः[5]स्थितं सम्मुखागतं विद्धि ॥३५॥

१ गतः A, गवा B
२ ततः पश्य A and B.
३ न B
४ पुर० A and B
५. पुनः MS

रक्षन्त्विमे गाः खचिता रथाश्चामीकरेण वः ।
शूरैः कृतिभिरारूढा मत्ताश्चामी करेणवः[१] ॥३६॥
निरस्य सस्त्रीकमिमं[२] जितगुं[३] रिपुदारकम् ।
अगोधनं जयं प्राप्य भविष्यसि[४] वृथाश्रमः ॥३७॥

रक्षन्त्वित्यादि ॥ वो युष्माकं चामीकरेण खचिताः सुवर्णेनालंकृता इमे रथा गाः रक्षन्तु । कृतिभिः कुशलैः शूरैर्वीरैरारूढा अमी मत्ताः करेणवो हस्तिनश्च गाः रक्षन्तु । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः (३।३।५२।) ॥३६॥

निरस्येति ॥ सस्त्रीकं स्त्रिया सहितं तथा जितगुं जिता गावो यस्य ईदृशम् इमं रिपुदारकं शत्रुपुत्रं निरस्य । निर्-पूर्वोऽसु क्षेपणे (धा०४।१००) पञ्चम्या हिः (का०३।१।२६), 'दिवादेर्यन्' (का०३।२।३२), 'हेरकारादहन्तेः' (का०३।४।३३) इति हि-लोपः । अनिरासे दोष[५]माह—अगोधनं [गोधन]रहितं जयं प्राप्य त्वं वृथाश्रमो विफलायासो भविष्यसि । यदि शीघ्रमसौ न निरस्यते तदानेन गावो निवर्तयितव्याः, पश्चादेतज्जयप्रयासोऽपि तव [fol 34a] विफलो भविष्यतीत्यर्थः । अथ च—हे अगो निस्तेजः सस्त्रीकं द्रौपदीसहितं तथा जितगुं हृतपृथ्वीकं तथा रिपुदारकं शत्रुविदारकं निरस्य जित्वा पश्चाद् [धनञ्जयमर्जुनं] प्राप्य[६] वृथाश्रमो भविष्यसि । अमुना पुनरपि राज्यादिकं नेतव्यमित्यर्थः ॥३७॥

---

१ A repeats शूरैः कृतिभिरारूढा after this. This verse is missing in B

२. निरस्येमं स सस्त्रीकं B.

३ जितसं or जितपुं A

४ भविष्यति A and B

५. देस MS

६ प्राप्त MS

इत्युच्यमाने भीष्मेण भीष्मेण[1] रणमूर्धनि।
शरै[2]र्दर्शितकोपार्थः पार्थस्तेषां पुरोऽभवत् ॥३८॥

Arjuna confronts them, and the fight begins

सपत्रफलयोगेन खगैश्चित्रैरलङ्कृतः।
स्फुरच्छाखामृगस्तस्य कल्पवृक्षोऽभवद्रथः ॥३९॥

इतीत्यादि ॥ [3]रणमूर्धनि युद्धशिरसि भीष्मेण भयङ्करेण भीष्मेण शान्तनवेन इत्युच्यमाने सति शरैर्बाणैः दर्शितः कोपस्य अर्थः [4]प्रयोजनं येन ईदृशः पार्थोऽर्जुनस्तेषां पुरः सम्मुखे अभवत् ॥३८॥

सपत्रेति ॥ पत्रं कङ्कादिपक्षः तेन सहितं यत्फलं 'फली' इति ख्यातं तद्योगात् चित्रैर्नानावर्णैः खगैर्बाणैः अलङ्कृतो भूषितः, तथा स्फुरन् शाखामृगो वानरो यत्र ईदृशस्तस्य रथः कल्पवृक्षोऽभवत् । तस्य कपिध्वजत्वात् । कल्पवृक्षोऽपि पत्रसहितस्य फलस्य योगेन चित्रैर्नानावर्णैः खगैः पक्षिभिरलङ्कृतो भवति । पत्रफलोपभोगाय नानावर्णाः पक्षिणः समागच्छन्ति, तथा स्फुरच्छाखामृगश्च भवत्येव ॥३९॥

---

१ This word omitted in A

२. बाणैः B.

३. MS has a redundant क here

४. MS inserts a redundant सु here.

अथ शङ्खध्वनिस्तस्य द्विषामुपरि घोषितः ।
निश्चचार शराग्निश्च भुजाग्रपरिघोषितः ॥४०॥

Description of Arjuna's skill in battle

स्निग्धेन चक्षुषा पश्यन् स द्रोणमशरैः शरैः ।
विव्याध द्विजवर्यं च दयालुः सकृपं कृपम् ॥४१॥
शलभैरिव कुर्वाणैर्बाणैर्व्योम निरन्तरम् ।
अदर्शयच्छान्तनवे नवं धनुषि लाघवम् ॥४२॥

अथेत्यादि ॥ अथानन्तरं घोषितो जनैः शब्दितः तस्यार्जुनस्य[1] शङ्खध्वनिः द्विषां शत्रू[fol. 34b]णाम उपरि निश्चचार उच्चचार । शत्रुभिः श्रुत इत्यर्थः । यद्यपि सर्वैरेव श्रुतस्तथापि तेषां भयं जनितमिति तस्योल्लेखः[2] कृतः । न केवलं शङ्खध्वनिर्निश्चचार शराग्निश्च निश्चचार । किंभूतः—भुज एव[3] परिघोऽस्त्रविशेषः तत्रोषितः स्थितः ॥४०॥

स्निग्धेनेत्यादि ॥ दयालुः सोऽर्जुनः स्निग्धेन स्नेहयुक्तेन चक्षुषा पश्यन् सन् अशरैः अहिंसकैः शरैर्बाणैः द्रोणं विव्याध ताडितवान् । सकृपं यथा स्यात्तथा कृपं द्विजवर्यं च विव्याध । 'शॄ हिंसायाम्' (धा०९।१८), शृणातीति[4] शरः, 'पचाद्यच्' (का०४।२।४८) ॥४१॥

शलभैरिति ॥ व्योम आकाशं निरन्तरम् अवकाशरहितं कुर्वाणैः शलभैः पतङ्गैरिव बाणैः शान्तनवं धनुषि तद्विषये नवं लाघवं लघुहस्तमदर्शयत् । एतेन तत्रापि शिक्षाविशेष एव केतुपातनं[5] कृतमिति सूचितम् ॥४२॥

---

१ °स्य added l m.

२ तसन्देख MS

३ भुजमेव MS

४ श्रृणोति MS.

५. दतुतातनं (?) MS

युद्धेषु[1] पुन[2]राधेयं राधेयं कुर्वता शरैः ।
वयसां पक्षपातेन क्षपा तेन रणे कृता ॥४३॥
स्मरन्नक्षमयीं मायां तदरीणामसौ बलम् ।
विचिन्वन्[3] बहुधा[4] चक्रे सद्यः कर्तुमसौबलम् ॥४४॥
विवृण्वन्निव देहस्थां सर्वभूत[5]विपत्त्रताम् ।
द्विषतां जनयामास स क्षणेन विपत्त्रताम्[6] ॥४५॥

युद्धेष्विति ॥ शरैर्युद्धेषु राधेयं कर्णं पुनः आधेयम् अर्पणीयं कुर्वता तेनार्जुनेन वयसां पक्षपातेन रणे क्षपा रात्रिः कृता । तेन ये ये पातितास्तेषां मांसाशया[7] बहवः पक्षिणः समागताः, तेषां पक्षैः सू[fol. 35a]र्यकिरणाच्छादना[द्] दिनेऽप्यन्धकारं जातमित्यर्थः । युद्धेष्विति बहुवचनात् पलाय्यागत्य कर्णो बहुवारं युद्धं कृतवानिति [सूचितम्] ॥४३॥

स्मरन्नित्यादि ॥ असौ अर्जुनः अक्षमयीं पाशकस्वरूपां मायां स्मरन् अरीणां तद् बलं सैन्यं सद्यस्तत्कालं असौबलं [मौ][8]बलेन शून्यं कर्तुं[9] विचिन्वन् विचारयन् बहुधा बहुभागं चक्रे । यत्र यत्रार्जुनो याति तत्र तत्रैव सैन्यं पलायत इति बहुधा जातमित्यर्थः ॥४४॥

विवृण्वन्नित्यादि ॥ देहस्थां शरीरस्थितां सर्वभूतविपत्त्रतां सर्वेषां भूतानां विपदस्त्रायकत्वं विवृण्वन् प्रकाशयन्निव क्षणेन द्विषतां

१ The order of verses 43—45 here adopted is that of the commentary. See Notes for the order given by A and B. युद्ध च B २ प्रन° A

३ विच्छिन्वन् B विचिन्नन् A ४ बहुशः B

५. पत्र A and B

६. B transposes the lines of the verse

७ मांसाशय MS

८ Space here for one letter in MS.

९ कर्णं MS

रथिनस्तमनुप्राप्य ये बभूवुरपत्रपाः ।
सन्त्रस्ता रणमुत्सृज्य तेऽपजग्मुरपत्रपाः ॥४६॥
रथाद्राजापचक्राम तस्योपहसतः सतः ।
तुल्योऽपहतवीर्यत्वान्निसर्गपिशुनः शुनः ॥४७॥
पश्यन्नेकरथेनाजौ बलमुद्र्जितं[1] जितम् ।
पीतं भीमेन रुधिरं मेने[2] दुःशासनः स नः ॥४८॥

[विपत्रतां] विगतवाहनत्वं जनयामास । विपत्त एव विपत्रतां[3] जनयितुं शक्नोति ॥४५॥

रथिन इत्यादि ॥ ये रथिनस्तमर्जुनमनुप्राप्य अपत्रपाः पत्रं पातीति पत्रपः सारथिस्तेन रहिता बभूवुः, ते सन्त्रस्तास्तथा [अपत्रपाः] अपगतलज्जाः सन्तो रणं युद्धमुत्सृज्य त्यक्त्वा अपजग्मुः अपगताः ॥४६॥

रथादित्यादि ॥ उपहसतः सतः[4], अनादरे षष्ठी, उपहसन्तं सन्तमनादृत्य निसर्गपि[शु]नः स्वभावखलः[5] अपहतवीर्यत्वात् शुनः कुक्कुरस्य तुल्यः सदृशो रा[fol. 35b]जा दुर्योधनो रथादपचक्राम ॥४७॥

पश्यन्निति ॥ एकरथेन एकेन रथेन, एकः श्रेष्ठः रथो यस्य ईदृशेनार्जुनेन वा[6] उद्र्जितं भीषितं तथा जितं निजसैन्यं पश्यन् स दुःशासनः नोऽस्माकम् रुधिरं असृक् भीमेन[7] पीतमिव मेने । भीमो हि दुःशासनस्य हृदयरुधिरं पातुं प्रतिज्ञातवान् । असौ भीमं[8] तदैवापस्थितममन्यतेत्यर्थः । कश्चित्तु[9] सनोतीति

---

१ द्विजितं A
२. पीतामेव सुरुधिरं मेने A
३ विपत्तितां MS
४ सहस्य for सतः MS   ५ °खलतया MS
६ न MS   ७ अथार्त्तीमेन MS
८. भीमः MS   ९ कश्चिदु MS

द्रोणभीष्मौ तु सन्त्रस्तौ बालाविव शिखण्डिनौ ।
प्राप्तौ ददृशतुर्मृत्यू[1] धृष्टद्युम्नशिखण्डिनौ ॥ ४९ ॥
पतितैः[2] सद्विपरथैः क्वचित् क्षतजवारिभिः ।
प्रवर्तिता द्रुतं तेन सरित् क्षतजवारिभिः ॥ ५० ॥
याति यावन्न तत्कर्म कुर्वति क्षितिपे लवः ।
तावद् भग्नोऽरिसङ्घोऽसौ स्व[3]वीर्यक्षितिपेलवः ॥५१॥

(धा०८।२) सनो दुःशासनो[4] रुधिरं पीतमिति मेने इति आचष्टे[5] ॥ ४८ ॥

द्रोणेत्यादि ॥ शिखण्डिनौ काकपक्षधरौ बालौ अतिशिशू इव सन्त्रस्तौ द्रोणभीष्मौ कर्तृभूतौ [ मृत्यू ] मृत्युस्वरूपौ धृष्टद्युम्न-शिखण्डिनौ द्रुपदस्य राज्ञः सुतौ कर्मभूतौ प्राप्तौ आगतौ ददृशतुः । द्रोणवधे धृष्टद्युम्नः सप्रतिज्ञः भीष्मवधे शिखण्डी सप्रतिज्ञ इति पुराणकथा ॥ ४९ ॥

पतितैरिति ॥ तेनार्जुनेन द्रुतं शीघ्रं क्षतजवारिभिः शोणित-जलैः सरिन्नदी प्रवर्तिता । किंभूता—क्वचित् प्रदेशे सद्विपरथैः हस्तिस्यन्दनसहितैः अरिभिः क्षतजवा हतवेगा । यत्र यत्र ते पतितास्तत्र तत्र वेगः स्खलतीत्यर्थः[6] ॥ ५० ॥

यातीत्यादि ॥ क्षितिपेऽर्जुने युद्धं कुर्वति सति यावत् लवो न या[fol. 36a]ति अल्पोऽपि क्षणो न हि याति, तावत्स्ववीर्यस्य आत्मनो बलस्य प्रभावस्य वा क्षित्या क्षयेन पेलवोऽसावरीणां[7] सङ्घो भग्नः पलायितः ॥ ५१ ॥

---

१. मृत्युं A.
२ पथि तैः A , पातितैः B
३ सु A
४. दुःशासनश्च MS
५ आचन्ते MS.
६ वेगस्थलती MS ७ पेलवोसदुवादं MS.

न जघान स तां भग्नां वाहिनीं समरागताम् ।
वहन् मित्रे च शत्रौ च दुःखिते समरागताम् ॥५२॥

Duryodhana's army finally routed

परित्राणमपश्यन्तीं खेदितामध्वनिन्दया ।
तामभूत् पश्यतस्तस्य द्रवन्तीमध्वनिन्दया ॥ ५३ ॥

इति सपदि[1] यशस्विना यशस्त्रै-
स्तदविरलं विपुलं[2] विधूय शस्त्रैः ।

न जघानेत्यादि ॥ समरागतां युद्धसमागतां वाहिनीं सेनां भग्नां पलायितामिति न जघान । किं कुर्वन्—दुःखिते शत्रौ मित्रे च समरागतां तुल्यानुरागत्वं वहन् । मित्रे यथा सानुरागस्तथा दुःखिते शत्रौ च सानुराग इत्यर्थः ॥ ५२ ॥

परीत्यादि ॥ परित्राणं रक्षामपश्यन्तीं तथाध्वनो वर्त्मनो निन्दया कुत्सया अपथेन पलायनात् खेदितां सञ्जातखेदां तथा द्रवन्तीं पलायमानां अध्वनिं भयात् शब्दहीनां तां पूर्वोक्तां वाहिनीं पश्यतस्तस्यार्जुनस्य दया कृपा अभूत् ॥ ५३ ॥

छन्दोभेदेन सर्गच्छेदमावेदयति—इतीत्यादि ॥ इति पूर्वोक्तप्रकारेण च यशस्विना तेनार्जुनेन यशस्त्रैः यशस्त्रायकैः शस्त्रैः तद्विपुलं महत् अविरलं सैन्यं विधूय तैर्गजहयनराणां हस्त्यश्वमनुष्याणां शोणितस्य प्रपातैः प्रपतनैः पिशिताशिनां मांसाशिनां प्रपा [पा]नीय-शालिका उपजनिता विहिता । अत्र[3] मांसभुजां शोणित-

१ श for स० B.
२ विततं B
३. अन्त्र or अङ्क MS

गजहयनर[1]शोणितप्रपातै-
रुपजनिता पिशिताशिनां प्रपा तैः ॥५४॥
परिपतितैश्च तेन पटुसारथिना रथिना
द्रुतमपयातमस्त्रविभवैरहितै रहितैः[2] ।
रयचल[3]केशरस्फुरदुरोवलिना बलिना
कथमिव न द्रवन्त्यनुसृता हरिणा हरिणा[4] ॥५५॥
इति नीतिवर्मविरचिते[5] कीचकवधे महाकाव्ये चतुर्थः सर्गः ॥

जलपानमुषितमेव । एतेन तत्र रणे [fol. 36b] ये पतितास्तन्मांसानि श्मशानपाचराचमादिभिः खादितानि, शोणितं च तैः पीतमित्यर्थः । पुष्पिताग्राच्छन्दः ॥५४॥

परीत्यादि ॥ पटुर्दक्षः सारथिर्यस्य ईदृशेन तथा[6] रथिना[6] प्रशस्तरथयुक्तेन तेनार्जुनेन परिपतितैः तथा अस्त्रविभवैः अस्त्रसम्पत्तिभिः रहितैः [अहितैः] शत्रुभिः द्रुतं शीघ्रम् अपयातं[7] पलायितम् । दृष्टा-[न्ता]न्तरमाह—रयेण वेगेन चलद्भिः केशरैः स्फुरन्ती शोभमाना उरसो हृदयस्य बलिर्यस्य ईदृशेन बलिना बलवता हरिणा सिंहेन अनुसृता अनुगता हरिणाः कथमिव [न] द्रवन्ति न पलायन्ते, अपि तु पलायन्त एव । इव-शब्दोऽत्र सम्भावनायाम् । नर्कुटकं[8] छन्दः ॥५५॥

इति कीचकटीकायां चतुर्थः सर्गः ॥

---

१ हतहयगज A ; नरहयगज B
२ This word is omitted in A
३ चय B.
४ हरिणाः A
५ Omitted in B
६. तथाश्विना MS
७. ऽपयतिं MS
८. तिलकं MS

## पञ्चमः सर्गः ॥

अथामपात्रेष्विव तेषु वीर्यं
संहृत्य[1] बाह्वोरुपलायमानम् ।
यथाप्रधानं स जगाद तेषां
पश्यन् बलं[2] भीरु पलायमानम् ॥१॥

Arjuna concludes by addressing in order of rank the heroes on the enemys side

अमी प्रणामप्रवणेन पूजिताः[3]
परेण सर्व[4]क्षितिपादरेण वः ।
गुरो चिरेणाद्य[5] मरुद्भिरीरिताः
पतन्तु मे मूर्धनि पादरेणवः ॥२॥

अथेत्यादि ॥ अथानन्तरम् आमपात्रेष्विव अ[6]दग्धमृद्भाण्डेष्विव तेषु शत्रुषु उपलायमानं प्रस्तरसदृशं[7] बाह्वोर्भुजद्वयस्य बलं संहृत्य [भीरु] भीतम् अतएव [प][8] लायमानं तेषां सैन्यं पश्यन् यथाप्रधानं प्रधानानुक्रमेण जगाद । उपलायमानमित्युपलशब्दाद् आय्यन्ताद् (का० ३।२।८) आनश् (का० ४।४।२) ॥१॥

उक्तिप्रकारमाह—अमीत्यादि ॥ हे गुरो द्रोण प्रणामप्रवणेन[9] नमस्कारतत्परेण [परेण] श्रेष्ठेन सर्वेषां क्षि [fol. 37a] तिपानाम् आदरेण पूजिताः सम्मानिता वो युष्माकं पादरेणवः चरणधूलयो मरुद्भिरीरिताः सन्तश्चिरेणाद्य मे मम मूर्धनि शिरसि पतन्तु । सर्वक्षिति-

---

१ संकीर्य B
२ बलं omitted in B  ३ पूजिता B
४. पूर्व A.  ५. गुरोश्चिरेणाद्य A शुद्धाश्चिरेणाद्य B
६. सु or अ MS  ७ पुस्तर० MS
८. Space left here for one letter.  ९ प्रणामपुरेण MS

इमां चमूं त्वच्छरणां विदित्वा जितामशेषां क्षपितामहत्वा ।
निवर्तमानः प्रणमामि मूर्ध्ना कृताश्रयां रक्ष पितामह त्वा ॥३॥

मयार्पितेऽस्मिन् किमसौ निशाते
मोहेन जाता[1] शकुने निशा ते ।
प्रयुज्य तत्तादृशमक्षतत्त्वं[2]
कथं त्वया कांक्षितमक्षतत्वम् ॥४॥

पादरे[3] [सति] परेणान्येनापि पूजिता अणवः[4] पादरेणवः पतन्त्वि-[ति] कश्चित् ॥२॥

इमामित्यादि ॥ हे पितामह भीष्म जितां परिभूताम् अतएव क्षपितां[5] खेदिताम् इमामशेषां चमूं त्वच्छरणां त्वमेव शरणं रक्षिता यस्या ईदृशीं विदित्वा अहत्वा अविनाश्य निवर्तमानोऽहं मूर्ध्ना शिरसा त्वा त्वां प्रणमामि । त्वयि[6] कृताश्रयाम्[6] आश्रितामिमां[6] सेनामेव रक्ष । न पुनर्हनिष्यामीत्यर्थः । अस्याः सेनायास्त्वं रक्षिता, तद्वधे[7] तवापमानः स्यादित्येव न हन्मि, न त्वशक्त्येत्यर्थः ॥३॥

मयेत्यादि ॥ हे शकुने मया निशाते असौ खड्गे अर्पिते सति मोहेन वैचित्र्येन ते तव असौ निशा रात्रिः किं जाता भूता । भयाद् दिनमेव रात्रिं मन्यमानः समरं त्यक्त्वा पलायसे इत्यर्थः । तादृशं तद् अक्षस्य पाशकस्य तत्त्वं प्रयुज्य अर्था[त्] कपटद्यूतप्रयोगं कृत्वा कथं त्वया अक्षतत्वं [अपीडनं कांक्षितम्] । तत् स्मृत्वा त्वामवश्यं हनिष्यामीत्यर्थः ॥४॥

---

१. याता B.
२ तत्वं A and B
३. क्षितिपपादपूरणे MS
४ पूजितऽनवः MS
५ खण्डितां MS
६ त्व ( or क ) कृताश्रेयां आवेतामितां MS
७ ष्याद्वधे (?) MS.

मास्म त्यजः कर्ण सखायमार्तं स्थितं सबाष्पं त्वयि चक्षुरस्य[1]।
द्वयं दुनोत्येनमितोऽपयांस्त्वं[2] समाः पृषत्का मम च क्षुरस्य ॥५॥

मित्रार्थकृत्ये प्रयतस्व[3] सौते
करोतु हस्तः प्रणयं स्वसौ ते।
त्वमुन्नते वर्त्मनि वर्तमानः
शोभस्व भग्नेषु निवर्तमानः ॥६॥

मास्मेत्यादि ॥ हे कर्ण आर्तं भीतं सखायं [fol. 37b] मित्रं दुर्योधनं मास्म त्यजः न त्यज। 'मास्मयोगे ह्यस्तनी चे'ति पञ्चम्या विषये ह्यस्तनी (का० ३।१।२३), 'न मामास्मयोगे' (का० ३।८।२१) इति अडागमनिषेधः। अस्य दुर्योधनस्य सबाष्पं क्रन्दनसहितं चक्षुः त्वयि स्थितम्। अश्रुमुखः सन् त्वामेव पश्यति, एतत्त्यागो न युक्त इत्यर्थः। इतो रणाद् अपयान् पलायमानः त्वम्, क्षुरस्य समाः क्षुरवत्तीक्ष्णाः मम पृषत्का बाणाश्च एतद् द्वयम् एनं दुर्योधनं दुनोति उपता[प]यति ॥५॥

मित्रेत्यादि ॥ सूतस्यापत्यं सौतिः। 'इणतः' (का० २।६।५) इति इण्। सौते कर्ण मित्रार्थकृत्ये मित्रनिमित्ते कार्ये प्रयतस्व यत्नं कुरुष्व[4]। ते तव हस्तः स्वसौ शोभनखड्गे प्रणयं प्रेम करोतु, खड्गं गृह्णात्वित्यर्थः। उन्नते वर्त्मनि वर्तमानस्तिष्ठन् त्वं भग्नेषु पलायितेषु मध्ये निवर्तमानः सन् शोभस्व। 'शोभां भजस्वाद्य[5]' इति पाठः, तदा अद्य निवर्तमानः सन् शोभां भजस्वेत्यर्थः ॥६॥

---

१. चक्ष॰ A.
२ ०पयातं A and B
३. ॰कृत्येषु यतस्व A
४. MS has प्रयतं कुरुष्व
५. भजस्वाष्ये MS.

यथा विरश्मेः शशिनः प्रभाते
गताद्य दुःशासन किं प्रभा ते।
स्त्रीकेशपाशे चपलायितेन
श्रेष्ठोऽसि[१] युद्धं च पलायितेन[२] ॥ ७ ॥

जनापवादैरवधूयमान-
स्त्रासेन सारङ्गवधूयमानः।

यथेति ॥ विरश्मेर्निस्तेजसः शशिनश्चन्द्रस्य प्रभा यथा तथा हे दुःशासन अद्य ते तव प्रभा किं कस्मा[द्] गता। अकस्मादेव कस्माद्धि-प्रभोऽसीत्यर्थः। त्वं स्त्रीकेशपाशे नारीकेशकलापे चपलायितेन चपल-[fol. 38a]वदाचरणेन युद्धे रणे पलायितेन पलायनेन[३] श्रेष्ठोऽसि। द्रौपदीकेशाकर्षणं सभायामयं कृतवानस्ति, तदेवानेन स्मारितम्। नारिकेशाकर्षणं युद्धे पलायनं च भवानिव कोऽपि न जानाती-त्यर्थः॥ ७ ॥

जनापवादैरिति ॥ हे सुयोधन दुर्योधन जनापवादैर्लोकपरीवादैः अवधूयमानः कम्प्यमानः तथा त्रासेन भयेन सारङ्गवधूयमानो हरिणस्त्रीव आचरन् पलायमानस्त्वम् अनेन युद्धे पलायनरूपेण शीलेन चरितेन केन हेतुना सुयोधनत्वं न यासि सुखेन योधयितव्यत्वं न प्राप्तोऽसि। त्वं सर्वैरेव सुखेन योधयितुं शक्य इत्यर्थः ॥८॥

---

१ त्वमेव B.

२. B transposes the last two lines

३ MS. inserts a redundant त्वं here

अनेन शीलेन सुयोधन त्वं
न यासि[1] केनाद्य सुयोधनत्वम् ॥८॥
बिभर्ति यः शास्त्रफलं मनूनां
द्युतिं च धर्मप्रभवामनूनाम् ।
सम्यग् हुतैर्येन जितं स्वराज्यै-
रुपस्थिता यं क्षितिपाः स्वराज्यैः ॥९॥
ब्रवीति योऽर्थेन न वाचमूनां
परः[2] प्रणेता समरे चमूनाम्[3] ।

बिभर्तीत्यादि ॥ यो युधिष्ठिरः मनूनां स्वायम्भवादीनां शास्त्रफलं बिभर्ति । तेनैव मनुप्रणीतग्रन्थाचारः कृत इति ग्रन्थस्य सफलत्वं जातमित्यर्थः । तथा अनूनाम् अन्यूनां धर्मप्रभवां पुण्यसम्भवां द्युतिं च बिभर्ति । तस्य धर्मपुत्रत्वाद् यज्ञादिपुण्यकर्मकरणाद् वा । तथा सम्यग् विधिवद् हुतैः आज्यैर्घृतैः येन[4] स्वः स्वर्गाख्यं भुवनं जितम् आत्मसात्कृतम्[5] । तथा यं क्षितिपा राजानः स्वराज्यैर्निज-राज्यैरुपस्थिताः । तस्य प्रियायाः केशपाशं [fol. 38b] संक्षोभ्य नोऽस्माकं दृष्टेः [पुरतः] क यासि इत्यन्वयः ॥८॥

ब्रवीतीत्यादि ॥ समरे युद्धे चमूनां परः श्रेष्ठः प्रणेता नायको

---

१. यामि B
२ पुरः B
३ A omits this line.
४. विधिवत् हुतैराद्यैपूर्तैयान MS
५ सात्यासात् MS

यो राजराजप्रतिमप्रभावो
नश्यन्ति यस्मिन्नुदिते प्रभा वः ॥ १० ॥
कृत्वा बलिं शत्रुशिरःकपालै-
र्यस्तुल्यतामेष्यति लोकपालैः ।
तस्य प्रियायाः खलु केशपाशं
संक्षोभ्य साक्षादिव केशपाशम् ॥ ११ ॥

यो युधिष्ठिरः अर्थेन ऊनाम् अनर्थकां वाचं न ब्रवीति, तथा यो युधिष्ठिरो राजराजप्रतिमप्रभावः कुबेरसदृश[1]राजदण्डजतेजाः, तथा यस्मिन् युधिष्ठिरे उदिते सति वा युष्माकं प्रभास्तेजांसि नश्यन्ति ॥ १० ॥

कृत्वेत्यादि ॥ श्लोकद्वयस्य योजना कृता[2] । यो युधिष्ठिरः शत्रुशिरःकपालैः बलिं पूजोपहारं कृत्वा, शत्रुशिरोभिर्देवता अर्चयित्वा, लोकपालैः इन्द्रादिभिः तुल्यतां सादृश्यमेष्यति, तस्य युधिष्ठिरस्य प्रिया[याः[3]] द्रौपद्याः, खलु वाक्यालङ्कारः, साक्षात्प्रत्यक्षं केशस्य जलपतेर्वरुणस्य पाशमस्त्रविशेषमिव केशपाशं चिकुरकलापं संक्षोभ्य क्षोभयित्वा शरक्षतं बाणविद्धं पृष्ठं धुनानः कम्पयन् अधुना इदानीमस्माकं दृष्टेः पुरत इतो रणभूमेः सकाशात् क्व यासि । पराङ्मुखत्वात् पृष्ठे बाणपतनम् । एवमनेन प्रकारेण गच्छन् पलायमान अतएव अवहस्यमानो जनैरुपहस्यमानोऽपि अमानो

१ सदृशको MS
२ कृते MS.
३. MS inserts a redundant साक्षात् here

शरक्षतं पृष्ठमितो धुनानः
क्व यासि दृष्टेः पुरतोऽधुना नः ।
एवं च गच्छन्नवहस्यमानः[१]
कथं च[२]वीर्यं न वहस्यमानः ॥१२॥

यद्वज्र[३]मय्यामपि जन्तुमूर्तौ कर्तुं समर्थं विषमस्वभावम् ।
तद् भीमसेने[४] प्रहितं त्वयासीद् धिक् त्वामनार्यं विषमस्वभावम् ॥१३॥

न मे त्वया रणमुपजातमस्यसि
प्रवेपितः[५] किमपि[६] भिया नमस्यसि ।

मान[fol. 39a]रहितस्त्वं कथं वीर्यं न वहसि । उपहासपरे शत्रौ पलायनमयुक्तम्, वीर्यमाश्रयेति भावः ॥११,१२॥

यदित्यादि ॥ यद् विषं गरलं वज्रमय्यामपि जन्तुमूर्तौ[७] कुलिशघटितेऽपि प्राणिशरीरे [अस्व][८]भावम् असूनां प्राणानाम् अभावं कर्तुं[९] समर्थं शक्तं तद् विषं भीमसेने त्वया प्रहितमासीत् । अये दुर्योधन अनार्यम् असज्जनं विषमस्वभावं दुर्बोध[१०]प्रकृति[कं][११] त्वां धिक् ॥१३॥

न मे इति ॥ हे दुर्योधन त्वया सह मे मम अस्यसि असिना प्रहृत्य वृत्तं युद्धं न उपजातम् । तथापि भिया किं नमस्यसि नम्रो भवसि

१ ०न्निरहस्य MS
२ नु for च A
३ वज्रं B
४ ०सेनेन B
५ प्रबोधित B
६. किमिति B
७. जन्तु सून्धौ MS
८ Space here for two letters in MS ९ बहुं MS
१० दुर्योधन MS ११ Space for one letter in MS

त्वमेष्यसि क्षयमचिरेण भीमतः
करोमि ते निधनमतो न भीमतः[1] ॥१४॥
विजृम्भते शरभयमोहितेऽहिते
न मादृशः स्थिररणगर्धनु[2]र्धनुः ।
पतच्छिरः स्थितमतिदीन तेन ते
दशामिमां किमिति मृगीव सेवसे ॥ १५ ॥

अचिरेण शीघ्रमेव त्वं भीमतो भीमसेनात् क्षयं विनाशमेष्यसि प्राप्स्यसि । अतो हेतोः भीमतो भययुक्तस्य ते तव निधनम् अन्तं न करोमि । रुचिराच्छन्दः ॥ १४ ॥

विजृम्भत इत्यादि ॥ स्थिरा रणगर्धा रणकांक्षा यस्य, 'गृधु अभिकाङ्क्षायाम्' ( धा० ४।१३६ ), असौ स्थिररणगर्धः । स चासौ ना पुरुषश्चेति स्थिररणगर्धना [ ईदृशस्य ] मादृशो धनुः शरभयमोहिते अहिते न विजृम्भते विक्रमते । यद्वा, उपहासपरं सम्बोधनम्, हे स्थिररणगर्ध अर्थात् स्थिररणाकांक्ष मादृशो नुः पुरुषस्य धनुः शर-[fol. 39b]भयमोहितेऽहिते न विजृम्भते । तेन हेतुना हे अतिदीन ते त[व] पतत् पात्यमानं शिरो मस्तकं स्थितम् । भीतमित्येव त्वां न छिनद्मीत्यर्थः[3]। तथापि इमां दशां भीतावस्थां मृगीव हरिणीव [किं] सेवसे । पलायसे इत्यर्थः ॥ १५ ॥

---

१. This line is written on the upper margin in A but only as करोमि ते न भीमतः

२ स्थिरधनगर्धनं B ; ०धन० for ०रण० in A

३ छेनन्वी MS

इत्युक्त्वा स निववृते निगृह्य रोषं
सम्भेदं[1] नयविहितस्य च क्रमस्य ।
सद्वाहाः[2] कथमपि ते रथं तमूहु[3]-
र्गम्भीरक्षतजनिरुद्धचक्रमस्य ॥१६॥
रविरपि शिखरं रथाङ्गनाम्ना-
मपहृतमानसमस्त[4]पर्वतस्य ।
द्रुतगतिरभजच्छ्रमं विमोक्तुं
धनुरिव खिन्नसमस्तपर्व तस्य ॥१७॥

With the approach of evening, the fight closed

इतीत्यादि ॥ सोऽर्जुनो रोषं क्रोधं नयविहितस्य नीतिकृतस्य क्रमस्य[5] पारिपाट्याः सम्भेदं समयं च निगृह्य निववृते रणान्निवृत्तः । ते सद्वाहाः प्रशस्ताश्वाः कथमपि कष्टसृष्ट्या गम्भीरेण क्षतजेन रक्तेन निरुद्धमावृतं चक्रं यस्य अर्जुनस्य तं रथम् ऊहुः[6] । शोणितेन रथचक्रस्य छिद्रपूरणात् कष्टसृष्ट्यैव [अ]श्वैः[7] स रथ ऊढ[8] इत्यर्थः । प्रहर्षिणीच्छन्दः ॥१६॥

रविरित्यादि । खिन्नानि समस्तानि पर्वाणि यस्य ईदृशं रणापगमान् निष्क्रियं तस्य दुर्योधनस्य धनुरिव शिथिलक्रियो रविरपि रथाङ्ग-नाम्नां चक्रवाकानाम् अपहृतमानसम् यथा स्यात्तथा अस्तपर्वतस्य पश्चिमाचलस्य शिखरं श्रमं विमोक्तुं त्यक्तुं द्रुतगतिः सन् अभजत् शिश्राय । पुष्पिताग्राच्छन्दः ॥१७॥

१ संभेदे B.
२. सद्वाहकः A
३ मुहुः° B.
४. °मपहतमान° B
५ जनम्य MS
६ उद्धः MS
७ श्रै MS
८ रथो वोच MS

अथ पथि कुरवो[1] जलाशयानां सह कुसुमप्रभयारविन्दिनां ते ।
भयपिहितदृशः प्रनष्टदिका[2] न ददृशु[3]रस्तमितं रविं दिनान्ते ॥१८॥

इति भवतु दशा तवा[4]हितानां
सकलमहीजयभूत वाहितानाम् ।
वस सुखमुदया[5]दहीयमानः
सकलधराधरणादहीयमानः ॥१९॥

Final benediction of the poet to his patron

इति नीतिवर्मविरचिते[6] कीचकवधे महाकाव्ये पञ्चमः सर्गः ॥
समाप्तश्चायं ग्रन्थः ॥

अथेत्यादि ॥ अथानन्तरं भयपिहितदृशः साध्वसावृतचक्षुषः, अतएव प्रनष्टदिका दिग्भ्रमसम्मोहितास्ते कुरवो दुर्योधनादयः अरविन्दिनां पद्मयुक्तानां जलाशयानां[7] पुष्करिण्यादीनां कुसुमप्रभया आश्रयत्वात्पद्मस्यैव प्रभया सह[8] दिनान्ते दिवसावमाने अस्तगतं रविं न ददृशुः ॥१८॥

इदानीमभिजात[9]ग्रन्थावसाने नीतिवर्मा कविर्निजं राजानमाशास्ते—हे सकलमहीजयभूत समस्तपृथ्वीविजयस्वरूप वाहितानां बाधितानां देशान्तरं प्रापितानां वा तव अहितानां शत्रूणाम् इति कुरूणामिवावस्था भवतु । त्वम उदयादहीयमानः उदयेन अहीनः सन् सुखं यथा स्यात्तथा वस, सुखेन तिष्ठेत्यर्थः । किंभूतस्त्वम्—सकलधराधरणाद् अहीयमानः योग्यतया अहिर्वासुकिः, स इवाचरतीत्यायिः (का० ३।२।८), वासुकिसदृश इत्यर्थः । तेनापि समस्ता मही ध्रियत इति ॥१९॥

इति श्रीजनार्दनसेनकृतायां कीचकवधटीकायां तत्त्वप्रकाशिकाख्यायां पञ्चमः सर्गः समाप्तः[10] ॥

---

१ पथिषु च कुमार्गके B
२. प्रदिशो for this phrase B
३ प्रददृशुः A
४ त missing in B
५. °मदया° A.
६ Omitted in B
७. जलाशयादीनां MS
८ स written u m
९. भीजात MS
१० The MS ends with श्रीश्रीहरिः

# NOTES

ST = Sarvānanda's Tīkā
MGA = Marginal gloss to the manuscript A.
Commentary = Janardana's Commentary.

I, 1

## CANTO I

This *mahākāvya* has the unique distinction of commencing with an *āśīḥ*-prelude. Of the three forms of prelude, permitted by theory (**आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्,** Dandin i, 14), all the known standard *mahākāvyas* begin either with *namaskriyā* or *vastu-nirdeśa*, and the *āśīḥ*-prelude is practically unknown in the *kāvya*, except in the *rūpaka*. On this question see our Introduction, and *JRAS*, January 1927, p. 109.

We have here two benedictions, one referring to Śiva (I, 1—3) and the other to Kṛṣṇa (I, 4 - 6).

The MGA accepts the reading **सुचरितोच्छेदी** and explains the phrase as: **शोभनं चरितमुच्छेत्तुं शीलं यस्य, यद्वा सुचरिता ब्रह्मादयो मुनयश्च तानुच्छेत्तुं शीलं यस्य।** The substance of the verse is given in the following words. **अयं भावः—तपस्यतो मम पुरतोऽयं कुसुमशरः सुचरितोच्छेदी[1] दुःसह इत्येवं सामान्यतो[2] ज्ञात्वा मम तपसः फलं गौरीसङ्गमेनैव[3] चिकारयिषुरयमिति विशेषतोऽनालोच्य मया भयाद्धत इति विवाहितायाश्च पार्वत्याः पुरतः सापराध इव तया[4] सह देहमभिन्नमकरोत्। एवञ्च[4] देहाभेदे पार्वती न कुप्यात्विति।**

I, 2

**अहिम् = वासुकिम्** (MGA) । **अहिंसितम् = अखण्डितम्** (MGA) = **अपीडितम्** (ST) । **इन्द्रियार्थैः—इन्द्रियाणि** (or **इन्द्रियेषु**

१. सुचरितच्छेदी MS.   २. सामान्यं MS.   ३. सङ्गमनेव MS.
४. Indistinct in MS.

ST) अर्थः[1] प्रयोजनं येषां तैः, or इन्द्रियाण्येव अर्थो विषयो येषां तैः (MGA) I ST explains स्रक्चन्दनवनितादयो विषयास्तैः I Agreeing with the commentary, MGA construes भस्मभिः with सितम्, but (agreeing with ST) it also suggests भस्मभिरुपलक्षितः शिवः[1] I हारम् = हारस्वरूपम् (ST).

I, 3 If the reading निःसङ्गम् is accepted, it would, when taken with करोतु, mean "unobstructed." But ST, which accepts this reading, construes it with उदयम् and paraphrases it as अव्याहतम्; at the same time it adds. निःशङ्कमिति पाठे क्रियाविशेषणम् I

I, 4 The curious reading त्रिलोकतना is given by the commentary, as against A and B as well as ST and MGA. The derivation is apparently from √तन् (तनु विस्तारे, धा० ८ I १), added to त्रिलोक; and the word would mean "extending over or covering the three worlds" (स्वर्गमर्त्यपातालरूपा), as explained by the commentary. MGA and ST, however, accept the reading त्रिलोकनता, which is explained respectively as त्रिभुवनैर्नमस्कृता and स्वर्गमर्त्यपातालवासिभिः पूजिता I

उपायेन = भेददण्डादिना (ST) I ऋजुगोपताम् = अवक्रगोपालताम् (ST).

I, 5 MGA explains पूतनाभि as पूता सुगन्धा नाभिर्यस्य तत्, पद्मनाभत्वात् तस्य, which would justify the reading अम्भोज० (instead of अम्भोद०) ST also reads अम्भोज०.

The adjective clause प्रभया already qualifying पूतना, the word भियः (as explained by the commentary) loses its force. Hence MGA suggests अभियः qualifying यस्य

१. These words are indistinct in MS

and explains it as **अविद्यमाना भीर्यस्य स तस्य**. Similarly ST, accepting **अभियः**, paraphrases it as **त्यक्तभयस्य**, qualifying **यस्य**. Our author appears to have used the form **सभीः** in III, 10. Cf. also **व्यपेतभीर्भूमिपुरन्दरात्मजः**, *Raghu*° iii, 51 (ed. Nandargikar, reading of MSS **क** and **ख**).

ST explains **प्रभया (पूतना)** as **प्रकृष्टभया**, but also suggests **मृतत्वात् प्रगतभया वा**.

I, 7 In order that it should be a proper *yamaka*, the word **विग्रह** in the second line must be explained differently from the same word in the first line. In both places, however, the commentary 1explains it as **शरीर** । MGA explains the whole phrase in the second line as . **अहिमालोकविग्रह इव**[1] । **अहिर्योग्यतया अनन्तः, मा लक्ष्मीः, तयोरालोकः दर्शनं यत्र स तथा । अहिमालोको विग्रहः शरीरं यस्य स कृष्णः, तस्याहिस्थितत्वात् कमलाहृदयत्वाच्च । सोऽपि स्वां स्थानं जगद्गीतमहिमा च । यद्वा, अहिमालोकः सूर्यः, तस्य विग्रहः शरीरं यस्य ।** This is ingenious indeed, but it does not remove the difficulty with regard to the *yamaka* in the word **०विग्रह**, because MGA omits to explain **लोकविग्रहः** in the first line.

It is possible to split up the second half of the first line as **जगद्गीतमहिमा + अलोकविग्रहः**, the phrase **अलोकविग्रहः** meaning **अदृष्टसंग्रामः**. But this is not happy nor grammatically perfect ; and one of the difficulties in accepting this explanation lies in the fact that in the following verses we are told that the king was actually engaged in many a fight.

The fact that the commentary fails to explain satisfactorily the word **विग्रह** as a *yamaka* is indeed

१ The commentary takes **इव** in **उत्प्रेक्षा** with **स्वां स्थानम्** ।

noteworthy. Is it possible that in this word we have a covert allusion to the actual name or designation of the king? ST seems to suggest this and gives **आलोकविग्रह** as one of the names or a *biruda* of the king. It explains **ततः परं श्रीरामनामानमालोकविग्रहं राजानं वर्णयन्नाह—अस्तीति। आलोकविग्रहनामा राजा अस्ति विद्यते।** In the present state of our knowledge of the political history of Kaliṅga anterior to the 11th century A.D. this name appears strange and untraceable.

But if the king did not belong to Kalinga (see notes on I, 21), the word **विग्रह** naturally points to Vigraha-pāla of the Pāla dynasty of Bengal As our poem must have been composed before the 11th century A.D. (see introduction), it is not impossible to find an allusion here to Vigraha-pāla I, whose uncle Jayapāla is said to have made an expedition against Kaliṅga (see I, 21), unless on other grounds we can refer it to other Vigraha-pālas of the same dynasty But our data are too scanty to come to a definite conclusion.

ST displays much ingenuity in explaining **अहिमालोकविग्रह** in the second line. It accepts the two interpretations of MGA but adds some new ones The whole passage runs thus. **अहिमालोकविग्रह इव, सूर्य इव। अहिमस्तीक्ष्ण आलोको रुचिर्विग्रहो वपुर्यस्य स तथा। यद्वा, रुचां स्थानं चन्द्र इव। तदा अहिमादिपदं राज्ञो विशेषणम्। अहिः शेषः, मा लक्ष्मीः, ताभ्यामालोक्यत इत्यहिमालोको विष्णुः, तस्य विग्रह इव विग्रहो यस्य स तथा। एतेन पावित्र्यं सूचितम्। यद्वा, अहिः सर्पो माला यस्य सोऽहिमालः शिवः, स इव, लुप्तोपमा। अकारो विष्णुः, को ब्रह्मा, तयोर्विग्रह इव विग्रहो यस्य स तथा। यद्वा, आत् विष्णोः कः प्रकाश उत्पत्तिर्यस्य सोऽकः कामदेवः, तत्तुल्यशरीर इत्यर्थः। यद्वा, अकारो विष्णुः को वायुः, तयोर्विग्रहपदे युद्धमुच्यते।**

I, 8 अक्षति is taken adverbially (न विद्यते क्षतिः क्षयो यस्मिन् तत्): but ST takes it as an adjective (neuter) qualifying ज्योतिः and meaning क्षयशून्यम्। स्वशक्तीनाम् = पितॄणाम्? (ST).

I, 9 The remark एतदप्युदात्तम् in the commentary is not clear, unless it refers to the poetic figure called उदात्त, which consists in the description of supermundane prosperity, greatness or mental power, or the exploits of a great personage, represented collaterally to the subject under treatment See Daṇḍin ii, 300, Mammaṭa X, 29, Viśvanātha X, 94-95.

I, 10 अपः श्यत्—The देवादिक root शो means "to make thin" or "to sharpen." The meaning of the lines would be. "The multitude of the king's enemies not perceiving any support (अपश्यद् अवलम्बनम्), went to the forest, feeble or unprotected (अबलम्), making the waters thin (अपः श्यत्) by their enjoyment of the springs (of water)." The *yamaka* is possible because the √दृश and √शो give us with the affix शतृ the forms पश्यत् and श्यत्. The difficulty, however, lies in the elision of *visarjanīya* of अपः (accusative plural) in the second line taken with श्यत्, which this explanation requires; for the phrase in the text is अपश्यत् (and not अपः श्यत्) rhyming with अपश्यत् derived from √दृश्. But the *visarjanīya* may be taken to have been elided optionally according to the *vārttika* खर्परे शरि वा विसर्गलोपो वक्तव्यः on Pāṇini viii, 3, 36. We have an example of such elision given by our poet himself in iv, 25 in the phrase बहुशस्त्री, which is to be split up for the sake of the *śleṣa* in the passage into बहु + शस्त्री (शस्त्रि) and बहुशः + स्त्री।

The *yamaka* with **व** and **ब** such as this verse exemplifies is allowed by theory. Nami-sādhu, in his commentary on Rudraṭa (p. 37), quotes this verse as an authoritative illustration and remarks: **यमकश्लेषचित्रेषु बवकारयोरोष्ठ्यदन्त्यौष्ठ्ययोरभेदो दृश्यते ।** Bhaṭṭa Gopāla in his commentary on Mammaṭa (ed. Trivandrum, 1926, p. 77) also quotes and comments on this verse as follows: **अत्र 'अवलम्बन'-शब्दे दन्त्योष्ठ्यकेवलोष्ठ्ययोः पौर्वापर्यादुच्चारणे पदमेकारुपदार्थम्, विपर्यये पदद्वयम् । अबलं परिकरशून्यम् अरिजात-मरातिवर्गो वनं काननं ययौ । किम्भूतम्—अवलम्बनमाश्रयम् अपश्यद् अप्रेक्षमाणम् । पुनश्च किम्भूतम्—निर्झरसम्भोगैः अपः सलिलानि श्यत् कृशीकुर्वत् । इति तात्पर्यात् ।** Similarly Bhoja in his *Sarasvatī-kaṇṭhâbharaṇa* (ed. Borooah, 1884, p. 79) remarks on this verse **अत्र 'अवलम्बनम्' 'अबलं बनम्' इति पदे पदद्वये वा द्वितीयचतुर्थस्थानयोर्यौ वकारौ तयोरन्तः-स्थपवर्गाभ्यां पवर्गान्तःस्थाभ्यां वा कान्तिमति पाठेऽर्थभेदो जायते ।** A similar interchange of **व** and **ब** in *śleṣa* is to be found in III, 29. These two consonants are pronounced in the same way (*i.e.*, as **ब**) in the Eastern provinces, and thus there could be no phonetic difficulty. This may be one indication of the Eastern origin of the present poem.

**I, 11** ST accepts the interpretation **शो तनूकरणे** but adds another ingenious explanation: **अथवा, शयनं शी, अदनम् अत्, अपगतौ श्यतौ यस्य तत्तथाभूतं तत् शत्रुजातम् । शयन-भोजनशून्यमिति भावः ।** The word **अवलम्बनम्** is paraphrased as **शरण्यस्थानम्**, while **'बलं सामर्थ्यसैन्ययोः'** is quoted with reference to the word **अबलम्** ।

**राजता = नृपतिसमूहो द्वादशराजमण्डलात्मकः** (ST).

**I, 12** The substance of the verse is thus given by ST: **कामक्रोधावेतावर्थविरोधिनौ तस्य गुणात् तावेतावप्यर्थहेतू अभवतामिति भावः ।**

**ह्यस्तनी** (commentary) of *Kātantra* corresponds to **लङ्** ।

**I,14** The commentary does not explain **जगदुच्छिन्नदुरित-प्रभवः,** which is to be construed with both the *upamāna* and *upameya*. It is explained in MGA as **जगतामुच्छिन्नो दुरितप्रभवो यस्मात्** । The commentary is also not complete in its explanation of **शाम्भवः**; for **क्षतपापः** is only a partial explanation, and the word **अपि** indicates that something is said before (which is now lost in the MS) in relation to the *upameya*. MGA explains **प्रसादेन प्रसन्नतया क्षता भक्तानां पीडोत्पत्तिर्यस्मात्, तादृशो महेशसम्बन्धी भव इव,** *i.e.*, the construction would be: **तादृशां [राज्ञां] भवः (=जन्म) शाम्भवो (=महेशसम्बन्धी) भवः (=जन्म** or **सत्ता) इव ।** This use of **भव** may be illustrated from *Raghu* iii, 14 **भवो हि लोकाभ्युदयाय तादृशाम्** । It is, however, possible to accept the reading **प्रसादः,** and construe the verse as **तादृशां भवः शाम्भवः प्रसाद इव,** the other qualifying clauses in the verse applying both to the *upamāna* and the *upameya* as before.

The explanation given by ST is much clearer: **तादृशां राज्ञां भवो जन्म शाम्भवः शम्भुसम्बन्धी भव इव । कीदृग भवः—जगदुच्छिन्नदुरितप्रभवः । जगतामुन्मूलितो दुःखस्य प्रभवो येन । अपि च कीदृक्—प्रसादक्षतभक्तार्तिप्रसूतिः । प्रसादेन खण्डितोऽनुजीविनां पीडाप्रसवो येन स तथा । स च शाम्भवो भव एतादृशो भवति ।**

**I, 15** **पुरोगतिः = अग्रगामी** (ST).

**I, 17** **सर्वनृगम्—सर्वान् नॄन् गच्छति गेयत्वसम्बन्धेनेति, यद्वा सर्वै-र्नृभिर्गीयते इति,** MGA, with which ST agrees. MGA

would take इव in this verse in the sense of उत्प्रेक्षा, and not *upamā*

ST explains नृगम् as नृगनामानं राजानम्, but also as कुवेर, explaining the word as आ मानुषेण गच्छतीति नृगः कुवेरः । अतिशेते is explained as सदृशीकृतवत् ।

I, 18 कृतस्वस्तिना—construe as कृतं स्वस्ति यस्मै तत् ।

I, 20 अन्वेति—वर्तमानप्राये लट् (MGA).

I, 21 शुचानुद्धरतः सिद्धान् नृपान्—explained by MGA as प्राचीनान् नृपान् शोकेनानुन्मूलयतः । एतेनास्य शत्रुवधेऽपि शोकाकुलत्वमुक्तम् । यद्वा, शोच्यन्त इति शुचाः । इगुपधात् कर्तरि कः (पा० ३ । १ । १३५) । तान् शोकं कुर्वाणान् सिद्धान् नृपान् उन्मूलयतः । प्राप्तान् (?) आधुनिकान् नृपान् शोकाकुलान् ?] कुर्वत इति भावः ।

ST explains सिद्धान् as प्रसिद्धान्, and on शुचा ( = शोकेन), it comments . मया उत्खाता एते नृपाः कां गतिं लप्स्यन्ते इति शोकः । But it is possible to explain सिद्धान् as सम्पन्नान् or जितान्, 'conquered' or 'defeated.'

कलिङ्गतः—has been construed as कलिङ्गदेशात् (MGA and ST) or कलिङ्गदेशादवधेः (commentary); and the lines have been interpreted as तस्य साधुवादः कलिङ्गतः सर्वां पृथ्वीं गतः, *i.e.*, 'from the limits of Kalinga, the cry of approbation of him spread to the whole world (because in his conquests, he did not uproot the old or famous princes out of pity).' In this case, the verse would imply that the poet's patron was, as interpreted by the commentary, the king of Kalinga. But it is also possible to take कलिङ्गतः with अनुद्धरतः, construing the first line as सिद्धान् नृपान् शुचा कलिङ्गतः अनुद्धरतः, meaning

'the cry of approbation of him who did not uproot from Kaliṅga the old or conquered princes out of pity spread to the whole world.' In this case the verse would apparently refer to a conquest of Kaliṅga by the poet's patron. The difficulty in this last interpretation lies in the plural number in **नृपान्**, which would imply more than one prince in Kaliṅga ; but it is possible to imagine the existence of petty principalities in the province known as Kaliṅga, which the poet's patron conquered, though he did not displace the princes whom he subjugated or oust them from their principalities. The question of interpreting this verse is important . for it will determine the question as to whether the poet's patron was a king of Kaliṅga, or a king of another adjoining country who conquered Kaliṅga. In the first case, the poem would belong to Kaliṅga : in the second, to Gauda or any other province adjoining to Kaliṅga. Prof. F. W. Thomas, in a letter to me, dated October 5th, 1927, favours me with his opinion thus : "In the verse I, 21 I incline to the second view, according to which Kaliṅga was the country conquered (*kalingataḥ* could still be taken with *kṣitiṁ gataḥ*), because the poet would not need to mention the king's own country by name ; but of course, the *yamaka* may have dictated the mention of the name. I also think that *siddhān* will mean *pitān*, as you suggest."

**I, 22** **अनुगतः = अनुकृतः। स्थिरसत्त्वेन = सत्त्वगुणप्रधानेन** (MGA).

**I, 23** MGA quotes **'मात्सर्येऽपि च मत्सरः' इति कोषान्तरम्।**

**I, 24** **सम्भृत = सम्यगुपार्जित** (MGA and ST). **नीतिधर्मणः** in the second line is explained to be in the ablative by MGA : **नीतिधर्मणः सकाशाज्जातम्, तेन कृतमित्यर्थः।**

